स्याशक्यत्वं व्युत्पादयति—। "कीदृशीमि"ति। कथायामेव दूषणाभिधानधौव्यादयं विकल्पावसरः ॥ "एतादृशे"ति । यदि प्रमाणादीनि न सन्ति तदा व्यवहार एव धर्मी न सिद्ध्येदित्येतादृशपर्य्यनुयोगानवकाशादित्यर्थः ॥ "स्वतोपी"ति । त्वमपि प्रमाणादिसत्त्वमनङ्गीकृत्य प्रवृत्त इति तन्मूलको व्याघातस्तवापि तुल्य इत्यर्थः ॥ "तथैवे"ति । प्रकृतनियहाधिकरणकथाप्रवृत्तिवत् कथान्तरप्रवृत्तिरपि न दुर्लभेत्यर्थः ॥ नन्वेतावता कथाप्रवृत्तिः समाहिता, व्याघातस्तु न समाहितः ? इत्यत आह—। 'उभये"ति । प्रमाणादिकमन्तरेण व्यवहारासिद्धिलक्षणो यो व्याघातस्त्वया दत्तः स मया नेष्यते इत्यर्थः ॥

मू० अन्यथा स्वाभिप्रायमालम्ब्य तेनापि त्वद्वचसि यत्किञ्चिद्वागात्मनि दूषणे ऽभिहिते कस्य जयो व्यवतिष्ठतां ? प्रमाणाद्यभ्युपगन्तुरेव यावन्नियमभरयन्त्रणा महती स्यात् । तस्मात्प्रमाणादिसत्त्वासत्त्वाभ्युपगमौदासीन्येन व्यवहारनियमेन समयं बद्ध्वा प्रवर्तितायां कथायां भवतेदं दूषणमुक्तमित्युचितमेव तथा सति स्यात् । योयं भवान्स्वाभिप्रायमपि नावधारयितुं शक्नोति दूरतस्तस्मिन्पराभिसन्धानावधारणप्रत्याशा ।

टी० ॥ ननु त्वदनिष्टोप्ययं दोष एव, नहीष्टत्वमपि दोषत्वे तन्त्रमित्यत आह—। "अन्यथे"ति । वागात्मनि=वाङ्मात्ररूपे[1])त्वयापादितोपि व्याघातो वाङ्मात्रमेवेति भावः ॥ किञ्च यद्युभयाननुमतोपि दोषस्तदा प्रमाणाद्यभ्युपगन्तुस्तव प्रामाणिकदोषानुसरणव्ययता स्वोद्भावितदोषस्य प्रामाणिकत्वव्यवस्थापनप्रयासश्च भवेदस्माकं तु नेयं व्यापृतिरित्याह— । "प्रमाणाद्यभ्युपगन्तुरेवे"ति ॥ कथातः पूर्वं प्रमाणाद्यभ्युपगमनियमोभयवाद्यननुमतदोषोद्भावनयोरकर्त्तव्यता([2]) मुपसंहरति—। "तस्मादि"ति ।

(१) हुंफट्शब्दादौ सङ्केतितदूषणभावे इत्यर्थः ।
(२) अकर्तृगततामित्यपि क्वचित्पाठः ।

उचितमेव तथा सति स्यादित्यत्र 'यद्युभयाभ्युपगतं स्यादि'ति शेषः। उपसंहृत्य परस्याहृदयज्ञत्वमुपपादयति—। "योयमि"ति। प्रमाणाद्यनभ्युपगम्य प्रवर्त्तितायां कथायां व्याघातोऽयं दत्तः, प्रमाणाद्यनभ्युपगमे कथायामप्रवृत्तिरिति चाभिधत्से, इति स्वा(१)भिप्रायानवधारणम्, कथात: पूर्वं प्रमाणाद्यभ्युपगमो न तन्त्रमिति मयोक्तं, प्रमाणादीनि न सन्तीति मदुक्तत्वेन त्वया गृहीतमिति पराभिसन्धानानवधारणम्, इयमस्मा[त्]पैतृकी व्याख्या ॥ व्याख्यान्तरं (२) तु—ननु मदीयस्तत्रापि प्रमाणाद्यभ्युपगमोऽस्त्येवेति प्रमाणाद्यभ्युपगमपूर्वकत्वं कथायां न व्यभिचरतीत्यत आह—। "उभये"ति। तथा च नान्यतराभ्युपगमोपि तन्त्रं, न चान्यतरासिद्धदोषाभिधानमुचितमित्यर्थः ॥ कथातः पूर्वमवश्यं समयबन्धः स्यात्, अन्यथा तवेदमनिष्टं स्यादित्याह—। "अन्यथे"ति उभयानभ्युपगतदूषणाभावस्यापि यदि दूषणत्वं तदा जयपराजयादिव्यवस्था न स्यादित्यर्थः। प्रमाणादिसत्तानभ्युपगन्ताहि प्रमाणाभासेनाप्यभिदध्यात्तदभ्युपगन्ता [च] प्रमाणत्वेन निश्चितेनैवेति तस्य महती यन्त्रणेत्याह—। "प्रमाणे"ति एव-यावदिति निपातद्वयमवधारणे, उचितमेवेति सोपहासम्। तदि[दं] व्याख्यानमसत्सन्दर्भमिव (३) ॥

**मू० *अथ वादीकृत्य दुर्वैतण्डिकं तस्मिन्नुपाधौ(४)बाधे ऽभियते इत्येव नेष्यते, शिष्यादयस्तु तस्य(५)कथान[धिकारं]**

(१) विद्यासागरीकृतस्तु कीदृशीं मर्यादामालम्ब्य प्रवृत्तायां कथायां भवत[ा] दूषणमुक्तमिति पृष्टे 'ईदृश्यां कथायां दोषमहमवादिषम्' इति स्वाभिप्रायाऽनवधा[र]णमाहुः।

(२) 'उभयाभ्युपगमानुरोधित्वाच्च कथानियमस्य' इत्यत आरभ्य निरुक्तग्रन्थ[स्य] व्याख्यान्तरमाह-व्येति।

(३) उपाधौ = वादिवाग्व्यवहारमूले इत्यर्थ इति विद्यासागराः केषुचित्पु[स्तके]षु तु नास्त्येवोपाधाविति पाठः।

(४) तस्य = वैतण्डिकस्य कथानधिकारंप्रत्यस्माभिः स्वशिष्यादय एव ज्ञाप[्य]न्ते इत्यन्वयपूर्वकोर्थः।

(५) असत्सन्दर्भसदृशत्वं चास्य व्याख्यानस्य कथाप्रवृत्तेः समाहितत्वेपि व्याघातस्याऽसमाहितत्वादुचेयम्। पूर्वोक्तस्वीयव्याख्यानस्य तु व्याघातसमाधानपत्ते योजितत्वाचाऽसत्सन्दर्भत्वम्।

धिकारं ज्ञाप्यन्ते, अत एव भाष्यकारः "स(१)प्रयोजनमनुयुक्तो यदि प्रतिपद्यते" इत्याहस्म नतु प्रतिपद्यसे इति * । मैवम्, शिष्यादीन्प्रत्यपि 'चार्वाकादेर्दोषोऽयमि'त्येवाभिधातव्यम्, कथं च तथा स्यात्, तस्य कथाप्रवेशनाऽप्रवेशनयोस्तद्बाधाक्षमत्वात्,

टी० ननु मया त्वयि व्याघातो नोक्तो येन तदनुरोधात्कथाऽभ्युपगमः, सा च कथा प्रमाणाद्यभ्युपगममन्तरेणैव प्रवृत्ता स्यादपितु शिष्या एवं ज्ञाप्यन्ते यद्वैतण्डिकः कथानधिकारीत्याशङ्कते— । "अथे"ति । यदि वैतण्डिकस्य जयाद्युद्देश्यं, तदा तदनुरोधात् प्रमाणाद्यभ्युपगन्तृत्वमपि, अथ किञ्चिदनुद्दिश्यैव कथायां प्रवर्तते तदोन्मत्त इवोपेक्षणीय, इति शिष्यशिक्षा 'नतु प्रतिपद्यसे' इत्युपलक्षणं नतु त्वं प्रयोजनमनुयुक्त इत्यपि द्रष्टव्यम् । वादिनि सम्बोध्ये मध्यमपुरुषप्रयोग उचित इति भावः ॥ शिष्योपि हि वैतण्डिकस्यायं दोष इति बोधनीयो, दोषश्च कथायामेवेति सा कथा प्रमाणाद्यभ्युपगममन्तरेणैवेति स्वीकार्य्यमित्याह— । "शिष्यादीनि"ति । प्रयोजनसत्ता न प्रवर्तिका किन्तु तज्ज्ञानं, तच्च वैतण्डिकस्यापीति न तस्य कथानधिकारोपीति हृदयम् ॥

मू० कथायामेव हि निग्रहः । नापि द्वितीयः, तथाहि-स्या(२)दप्येवं यदि कथकप्रवर्तनीयवाग्व्यवहारंप्रति प्रमाणादीनां हेतुता तत्सत्त्वानभ्युपगमे निवर्तेत, नत्वेवं सम्भवति तथा सति तत्सत्त्वानभ्युपगन्तॄणां

(१) स=दुर्वैतण्डिकः, अनुयुक्तः=पृष्टः सन् यदि प्रयोजनं प्रतिपद्येत यद् एतादृशं विजयादिकं फलमुद्दिश्याहं कथायां प्रवृत्तस्तदा प्रतिपद्येतैव प्रमाणमपि तदधीनत्वात्प्रतिपत्तेः, अथ न, तदोन्मत्तवदुपेक्षणीय इति न्यायवात्स्यायनभाष्यार्थः ।

(२) कारणत्वं ह्यन्वयव्यतिरेकाभ्यामेव गृह्यते तथा च—प्रकृते व्यतिरेकाभावान्न प्रमाणाद्यभ्युपगमस्य वाग्व्यवहारंप्रति कारणत्वमित्याह-स्यादपीति, स्यादप्येवं कथकप्रवर्तनीयवाग्व्यवहारं प्रतिप्रमाणादीनां ( अभ्युपगतप्रमाणानां, वा प्रमाणादीनामभ्युपगमस्य ) हेतुता, यदि तत्सत्त्वाऽनभ्युपगमेनिवर्तेत वाग्व्यवहार इत्यन्वयः ।

वाग्व्यवहारस्वरूपमेव न निष्पद्येत हेत्वनुपपत्तेः,
क्तश्चायमर्थो यन्माध्यमिकादिवाग्व्यवहाराणां स्वरू
पापलापो न शक्यते इति । अथ मन्यसे * कथकवा
ग्व्यवहारं प्रति हेतुत्वात् प्रमाणादीनां सत्त्वं, सत्त्वा
च्चाभ्युपगमो, यत्सत्तदभ्युपगम्यते इति स्थितेः * इति
मैवम्, कयापि नियमस्थित्या प्रवृत्तायां कथायां कथ
कवाग्व्यवहारं प्रति हेतुत्वात् प्रमाणादीनां सत्त्वं
सत्त्वाच्चाभ्युपगमो भवता प्रसाध्यः,

टी० । "कथायामेवे"ति । अखण्डिताहङ्कारेण पराहङ्कारख
नस्य कथाकारणसम्यक्ज्ञानाऽभावस्य वा निग्रहत्वादिति भावः ॥ 'प्रम
णाद्यभ्युपगमो वाग्व्यवहारहेतुः'इति द्वितीयं पक्षं निराचष्टे-। "नापि
ति । वाग्व्यवहारंप्रति प्रमाणादीनां हेतुत्वं सम्भाव्येतापि नत्वभ्युप
स्यापि, माध्यमिकादिवाग्व्यवहारे व्यभिचारादित्यर्थः ॥ * ननु प्र
णादीनां हेतुत्वं यदि मनुषे तदा तदभ्युपगमस्यापि हेतुत्वं मंस्यसे, य
नियतपूर्वसत्त्वं त्वयाऽवश्याभ्युपेयमित्यवर्जनीयसिद्ध एव प्रमाणाद्यभ्यु
गम-इति शङ्कते (१)- । "अथे"ति । यद्यदा सत्तया ज्ञायते तत्त
ऽभ्युपगम्यते इति व्याप्तेरुभयसिद्धत्वादिति भावः ॥ 'प्रमाणादीनि
हेतुत्वात् ब्रह्मवत्, प्रमाणादीन्यभ्युपगमविषयः सत्त्वात् ब्रह्म
इति यस्यां कथायां त्वया साधनीयं तद्वदेव कथान्तरमपि स
अथ सापि प्रमाणाद्यभ्युपगमादेव प्रवृत्ता तदा तस्यां प्रमाणाद्यभ्युप
हेतुत्वसाधनानर्थक्यम्, अथ तस्यामेव कथायां प्रमाणाद्यभ्युपगम
हेतुत्वं प्रसाध्य तत्कथाप्रवृत्तिस्तदाऽन्योन्याश्रय (२) इत्याह= । "क
पी"ति । अग्रे वक्ष्यमाणयेत्यर्थः । नियमस्थितिः=समयबन्धः ॥

(१) शङ्कते=पूर्वपक्षिणमुद्दिश्यस्वयं शङ्कां समर्पयतीत्यर्थः । शङ्का तु 'अ
इत्यारभ्यैव ।

(२) तत्कथाप्रवृत्तौ प्रमाणाद्यभ्युपगमस्य हेतुत्वसिद्धिः, तत्सिद्धौ च कथ
त्तिरिति ।

मू० कथातः पूर्वं तत्त्वावधारणं वा परपराजयं वाऽभिलषद्भ्यां कथकाभ्यां यावता विना तदभिलषितं न पर्यवस्यति तावदनुरोद्धव्यं, तच्च व्यवहारनियमसमयबन्धादेव द्वाभ्यामपि ताभ्यां सम्भाव्यते इति व्यवहारनियमसमयमेव बध्नीतः (१)। स च 'प्रमाणेन तर्केण च व्यवहर्तव्यं वादिना, प्रतिवादिनापि कथाङ्गतत्त्वज्ञानविपर्ययलिङ्गप्रतिज्ञाहान्याद्यन्यतमनिग्रहस्थानं तस्य दर्शनीयं, तदुद्भावने प्रथमस्य भङ्गो व्यवहर्त्तव्यः, अन्यथा तु द्वितीयस्यैव, तादृशेतरौ च जेतृतया व्यवहर्त्तव्यौ, प्रामाणिकः पत्रस्ताक्षिकतया व्यवहर्त्तव्यः' इत्यादिरूपः। अत (२) एव 'व्यवहारनियमसमयबन्धेपि हेतुर्वक्तव्यः तथाच सोपि हेतुः कथायां प्रवृत्तायामभिधातुं युक्त' इति प्रमाणसत्त्वाभ्युपगमहेत्वभिधानवत् प्रत्यवस्थानमनवकाशम्,

टी० ननु प्रमाणाद्यभ्युपगमवत्समयबन्धोऽपि कथायामतन्त्रमेवेत्यत आह-"कथातः पूर्व"मिति ॥ ननु प्रमाणादिसत्तापि तथैवानुरुद्धतामित्यत आह- । "तच्चे"ति । समयबन्धस्यावश्यकत्वात् तन्मात्रमनुरोध्यं नतु प्रमाणाद्यभ्युपगमोपीत्यर्थः ॥ अनुरोध्यं समयबन्धं दर्शयति- । "स चे"ति । कथाङ्गतत्त्वज्ञानविपर्ययो ऽज्ञानमसम्यग्ज्ञानं वा ॥ कथाव्यवस्थामुक्त्वा फलव्यवस्थामाह-"तदुद्भावने" इति । उद्भावितनिग्रहव्यवस्थापने प्रथमस्य भङ्गः, तदव्यवस्थापने निरनुयोज्यानुयोगात् द्वितीयस्यैव भङ्ग इत्यर्थः ॥ "तादृशेतरावि"ति । समर्थितनिग्रहा(३)शक्यसमर्थननिग्रहभङ्गप्रयोजकरूपरहिताविन्यर्थः ॥ जल्पे वितण्डायां च फलव्यवस्थामभिधाय

(१) वादिप्रतिवादिनौ, इति शेषः।
(२) अत एव=वक्ष्यमाणादेव हेतोरित्यर्थः।
(३) समर्थितो यो निग्रहोऽशक्यसमर्थनश्च यो निग्रह एतदुभयं भङ्गप्रयोजकं रूपं, तद्रहितावित्यर्थः।

वादे तामाह- । "प्रामाणिक"इति । व्यवहारश्च वस्तुसत्त्वं विनापि
भावः॥ ननु समयबन्धस्यापि कथाहेतुत्वे विप्रतिपन्नः कथायामेव प्रबो
इति तत्कथावत् कथान्तरमपि स्यादित्यत आह- । "अत एवे"ति

मू० द्वाभ्यामपि वादिभ्यां विचारप्रवृत्त्याभिलष्यमाण
त्त्वव्यवस्थाजयमूलत्वेन व्यवहारनियमस्य स्वेच्छ
परिगृहीतत्वात् । * नचैवं प्रमाणानुपज्ञ (१) स्वेच्छ
मात्रपरिगृहीतमूलत्वात् मूलापरिशुद्धिसम्भवेन
र्वविचारविचार्य्यफलविप्लवापत्तिः स्यात् * । अ
द्याविद्यमानाऽनादिपारम्पर्य्यायातस्य (२) लोकव्यु
त्तिगृहीतसंवादस्य (३) च तस्यान्यथाभावासम्भा
तालक्षणस्वतःसिद्धिपरिशुद्धत्वात् । * नच प्र
णादीनां सत्तापीत्थमेवाभ्यामङ्गीकर्त्तुमुचिता
तादृशव्यवहारनियममात्रेणैव कथाप्रवृत्त्युपपत्ते
प्रमाणादिसत्त्वाभ्युपगमेपि तथाविधव्यवहारनि
व्यतिरेके तत्त्वनिर्णयस्य जयस्य वाऽभिलषितस्य
कयोरपर्य्यवसानात् ।

टी० अत एवेत्यस्यातिदेश्यमाह-। "द्वाभ्यामपी"ति । य
समयबन्धस्येच्छापरिगृहीतत्वे विप्रतिपन्नः कथायामेव प्रबोध्यते इत्य
दोषस्तदवस्थ एव, तथापि समयबन्धमात्रेण कथाप्रवृत्तौ प्रमाणाद्य
गमस्य कथाङ्गत्वकल्पना गौरवपराहतेति भावः ॥ समयबन्धस्य

(१) प्रमाणेनाऽनुपक्रम्य स्वेच्छामात्रपरिगृहीतो नियमबन्धो मूलं यस्य वि
स्येति विग्रहः "उपज्ञा ज्ञानमाद्यं स्याज्ज्ञात्वारम्भ उपक्रमः" इत्यभिधानात् । प्रमा
पज्ञा=आद्यज्ञानं यस्य नास्तीति, प्रमाणज्ञानशून्येनेति वार्थः ।

(२) अविद्यया विद्यमानश्चासावनादिपारम्पर्येणायातश्चेति तथा, तस्य
विद्यासागरोक्तरीत्यातु "अविद्यमानादिपारम्पर्यायातस्येति पाठः तदर्थस्तु अवि
आदिर्यस्य परम्पराभावस्य तेनायातस्येति ।

(३) लोकव्युत्पत्त्या=वृद्धव्यवहारेण गृहीतो'ऽन्यथा न भवति' इति
यस्य समयबन्धस्य तस्येत्यर्थः ।

हेतुत्वेऽनिष्टमाशङ्कते— । [b]"नचैवमि"ति । विचारविप्लवः=साधनदूषणप्रयोगाव्यवस्था । विचार्यविप्लवः=पक्षविपक्षाव्यवस्था, वादिप्रतिवाद्यव्यवस्था वा ; तयोरपि विचार्यत्वात् । फलविप्लवः=जयभङ्गाऽव्यवस्था, तत्त्वनिर्णयाऽव्यवस्था च । यद्वा विचारविप्लवः=प्रमित्यजनकत्वं, विचार्यविप्लवः=प्रमित्यविषयत्वं, फलविप्लवः=जयाद्यभावः । अविद्याविद्यमानत्वाभिधानं समयबन्धस्याप्यपारमार्थिकत्वाय । अनादिपारम्पर्यायातस्येत्यवश्याभ्युपगन्तव्यत्वार्थम् । गृहीतसंवादस्यान्यप्रामाण्यशङ्कानिरासाय । ननु समयबन्धस्याज्ञानरूपतया स्वतःसिद्धत्वमनुपपन्नम्? अत उक्तमन्यथाभावासम्भाव्यतालक्षणेति । समयबन्धो न कर्त्तव्यः—इति सम्भावनाविरह एव तस्य स्वतःसिद्धत्वमिति भावः ॥ [c]"इत्थमि"ति । समयबन्धाङ्गताङ्गीकारप्रकारेणैवेत्यर्थः ॥ अन्यथासिद्धिमाह—। [d]"तादृशे"ति ॥ समयबन्धस्योपजीव्यत्वमाह—। [e]प्रमाणादीति ॥

मू० नापि तृतीयः, लोकव्यवहारो हि [a]प्रमाणव्यवहारो वा स्यात्?, पामरादिसाधारणव्यवहारो वा? । नाद्यः, विचारप्रवृत्तिमन्तरेण [b]तस्य दुर्निरूपत्वात् [c]तदर्थमेव च पूर्वं नियमस्य गवेषणात् । नापि द्वितीयः, [d]शरीरात्मत्वादीनामपि तथासति भवता स्वीकर्त्तव्यतापातात् । * [e]पश्चात् तद् विचारबाध्यतया नाभ्युपेयते*?—इति चेत्, [f]तर्हि प्रमाणादयोऽपि यदि विचारबाध्या भविष्यन्ति तदा नाभ्युपेया एव, अन्यथा तूपगन्तव्याः; इति 'लोकव्यवहारसिद्धतया सत्त्वमभ्युपगम्यते'—इति तावन्न भवति । नापि चतुर्थः, [g]यादृशो भवता प्रमाणादीन्यभ्युपगम्य व्यवहारनियमः कथायामालम्ब्यते तस्यैव प्रमाणादिसत्त्वा

ऽसत्त्वानुसरणोदासीनैरस्माभिरप्यवलम्बनात्, तस्य
यदि मां प्रति फलातिप्रसञ्जकत्वं, तदा त्वां प्रत्य
समानः प्रसङ्गः ।

टी० । [a]"प्रमाणे"ति । लोक्यते (२)इति लोकः प्रमाणमित्यां
प्रामाणिकलोकव्यवहारइति वाऽर्थः ॥ [b]"तस्ये"ति प्रमाणव्यवहारस्येत्यर्थः
तर्हि विचारप्रवृत्त्यत्र तन्निरूप्यतामत आह–। [c]"तदर्थमेवे"ति । वि
रार्थमेवेत्यर्थः । तथाच–विचारप्रवृत्त्या प्रमाणाद्यभ्युपगमस्य प्रमाण
द्धत्वं, तत्प्रमाणसिद्धत्वेन च तदधीनविचारप्रवृत्तिरित्यन्योन्याश्रय
भावः ॥ [d]"शरीरे"ति । 'अहं स्थूलः' इति प्रत्ययात् शरीरे एवात्म
हारादित्यर्थः ॥ विचाराऽबाध्यलोकव्यवहारसिद्धत्वमभ्युपगम्यतायां
मित्याह–। [e]"पश्चादि"ति ॥ विचाराऽबाध्यलोकव्यवहारसिद्धत्वं
णादीनामप्यसिद्धमित्याह–। [f]"तर्हो"ति ॥ [g]"यादृश"इति । तत्त्वा
यविजयातिप्रसङ्गभिया प्रमाणाद्यभ्युपगमः कथातः पूर्वं त्वया क्रियते,
नियतसमयबन्धेनैव तद्वयं निवर्तेत तदा वृथा प्रमाणाद्यभ्युपगम इत्य

मू० *"स्यादेतत्, नियत(३)वाग्व्यवहारक्रियासमयब
कथां प्रवर्तयतापि व्यवहारसत्ताभ्युपगन्तव्या,
हि सत्तामनभ्युपगम्य व्यवहारक्रियाऽभिधातु
क्या, क्रिया हि निष्पादना, असतः सद्रूपताप्रा
मिति यावत् । [c]'प्रमाणै(४) र्व्यवहर्त्तव्यमि'ति

(१) तस्य=व्यवहारनियमस्य ।

(२) यथा व्युत्पत्त्या मूले लोकव्यवहारपदस्य 'प्रमाणव्यवहारः'–इत्यर्थां
चमत्वं दर्शयति,–तत्र कर्मधारयम् अन्याह · लोक्यते इति षष्ठीतत्पुरुषमादायाह
णिकेति: एतद्व्याख्याऽनुरोधेन मूले 'प्रामाणिकव्यवहारः'–इति पाठो दृश्यमान
उपेक्षणीयः, अन्यथापि 'तस्येति प्रमाणव्यवहारस्येत्यर्थः'–इति व्याख्यानाऽसाङ्गत्यप्र

(३) नियतत्वं समयबन्धस्य विशेषणं, तथा च वाग्व्यवहारक्रियया क्रि
वा, वाग्व्यवहारक्रियारूपो वा, वाग्व्यवहारक्रियायाः सम्बन्धो वा, यो नियत
बन्धस्तेन कथां प्रवर्तयतापीत्यर्थः ।

(४) न केवलं व्यवहारसत्त्वं खोत्स्येत्रेष्टं प्रमाणादिसत्त्वमपि त्वदुक्त्यैव
पद्यते–इत्याह–प्रमाणैरिति । प्रमाणैः–इति तृतीयया करणत्वाऽभिधानात् तस्य

बन्धनं (प्रमाणकारणभावस्य नियमान्तर्भावात् नियतपूर्वसत्त्वं कारणत्वं प्रमाणानामनादाय) न पर्यवस्यति । दूषणानां(¹) चास्तित्वेन भङ्गावधारणनियमबन्धने, साधनाङ्गव्याप्त्यादीनां सत्त्वेन तद्विषयस्य तत्त्वरूपताव्यवहारनियमनादौ च, [d]कण्ठोक्तमेव तस्य तस्य सत्त्वमङ्गीकृतमिति रिक्तमिदमुच्यते–'प्रमाणादीनां सत्तामनभ्युपगम्य कथारम्भः शक्यते'–इति * ? । नैवम्, 'एभिरपि बाधकैः कथायामारब्धायामेवाभिमतस्य प्रसाधनीयत्वे पूर्वोक्तबाधाया अनिस्तारात् ।

टी० ननु द्वैतापत्तिभयेन प्रमाणादिसत्तां नाभ्युपैषि, तच्च व्यवहारसत्त्वाभ्युपगमेऽप्यविशिष्टं, किञ्च व्यवहारादिसत्ताभ्युपगमनान्तरीयक[त्र] प्रमाणादिसत्ताभ्युपगमोऽपीति कथायां तद्धेतुत्वमवर्जनीयमिति शङ्कते– "स्यादेतदि"ति ॥ व्यवहारसत्ताभ्युपगममुपपादयति–। [b]"न ही"ति ॥ [प्र]माणसत्ताभ्युपगममुपपादयति–। [c]"प्रमाणैरि"ति ॥ [d]"कण्ठोक्तमि"ति । 'दूषणानि सन्ति' 'व्याप्तिरस्ति'–इत्यादिवचनं तत्सत्ताभ्युपगमपरमेवे[त्य]र्थः ॥ प्रवृत्तायामेव कथायामयं बाधस्त्वया वाच्यः, तत्कथाप्रवृत्तिवत् [कथा]न्तरप्रवृत्तिरपीति न किञ्चिदेतदिति परिहरति–। [e]"एभिरपी"ति । [प्रा]गपि सा कथा प्रमाणाद्यभ्युपगमपूर्विकैव, त्वं पुनरिदानीं तत्र विप्रति[प]त्तिः समयबन्धमङ्गीकुर्वन् प्रमाणादिसत्ताभ्युपगममङ्गीकार्य्यसे, इति नानुपपत्तिः, तथापि प्रमाणादिसत्ताभ्युपगमेऽपि न प्रमाणादिसत्तासिद्धिः, [अ]तत्त्वमात्रयुक्तेरिति हृदयम् ॥

[वि]शेषत्वात् कारणत्वस्य च कार्याऽव्यवहितप्राक्सत्त्वरूपत्वात्प्रमाणानां सत्त्वमनङ्गी[कृत]स्य नियमबन्धनमेव न पर्यवस्यतीत्यर्थः ॥

(१) 'यस्य मते दूषणानि सन्ति तस्य भङ्गोऽवधारणीयः, यस्य तु हेतौ साधनाङ्ग[व्या]प्त्यादीनां सत्त्वं तस्य पक्षस्तत्त्वरूपो व्यवहर्त्तव्यः'–इति नियमबन्धने कण्ठोक्तमेव [तत्र]स्य तस्य व्याप्त्यादेः सत्त्वमित्याह–। दूषणानामिति ।

मू० *"नच व्यवहारनियमस्य स्वेच्छास्वीकृतस्यैव प्रमा
दिसत्तास्वीकारपर्यवसायितया नायं दोषः स्यात्
यतः सत्ताज्ञानस्य तत्रा(१)ङ्गत्वं, नतु सत्ताया
ᵇतत्र(२) किं सत्त्वावगममात्रात् सत्ताभ्युपगमं
मन्यसे ?, अबाधितात्तदवगमाद्वा ? । न तावदा
मरुमरीचिकादौ जलरूपतासद्भावाभ्युपगमप्रसङ्गा
द्वितीयेपि किं वादिप्रतिवादिमध्यस्थमात्रस्य (तत्र
पि कथाकालमात्रे एव) बाधितावगमाभावात्
अथवा कस्यचिदपि कालान्तरेपि च बाधितबोध
रहात् ? । नाद्योऽतिप्रसङ्गात्, ᶜपुरुषत्रयावगतस्य
(३)एकक्षणावगतस्य पुरुषान्तरेण, तेनापि क्षणान
बहुलं बाध्यत्वदर्शनात् । नचासावर्थोऽसत्येपि
त्रादिपुरुषमात्रपूर्वजाततत्प्रतीत्यनुरोधा(४)द्, ब
दर्शने सञ्जातेपि, तथैव सन्नित्यभ्युपगम्यते । त
द्, ᵈद्वितीयः पक्षः परिशिष्यते-'यत्र सर्वप्रक
बाधितत्वं नास्ति तत्सदित्यभ्युपगन्तव्यम् ।

टी० ननु कथायां कस्याञ्चित्प्रमाणादिसत्ताभ्युपगमो न म
प्रति साध्यते, किंतर्हि, स्वेच्छया यः समयबन्धः परिगृहीतः स प्रमाण
स्वाभ्युपगमपर्यवसन्नः-इति त्वं बोध्यसे ? इत्यत आह- ''नचे'ति
यबन्धः प्रमाणादिसत्ताज्ञानमात्रमाक्षिपति, नतु प्रमाणादिसत्ताम
द्वैतापत्तिरिति भावः ॥ ननु प्रमाणादिसत्ताज्ञानं चेदायातं तदा त

(१) तत्र=कथायाम् ।

(२) तत्र=प्रमाणादिसत्ताज्ञानस्य कारणत्वस्वीकारे सति ।

(३) पुरुषत्रयावगतस्यापि पुरुषान्तरेण बहुलं बाध्यत्वदर्शनात्, एकक्ष
च क्षणान्तरे तेनापि बहुलं बाध्यत्वदर्शनादित्यन्वयः ।

(४) अबाधितबुद्ध्यनुरोधादित्यर्थः ।

सोऽपि(¹)सिद्धः, तत्रैव च त्वं विप्रतिपन्नः ? इत्यत आह—। [b]"तत्र किमि"ति । यद्वा 'नावगममात्रं कथाहेतुरपितु प्रमाणादिसत्तावगमः'–इति विशिष्टकारणताग्राहकं मानं(²)विशेषणमपि विषयीकरोतीति प्रमाणादिसत्ताभ्युपगमो(³)ऽपि कथाहेतुः,–एवं तदवगमोऽपीत्यत आह—। "तत्र किमि"ति ॥ अतिप्रसङ्गमेव दर्शयति—। [c]"पुरुषत्रये"ति ॥ [d]"द्वितीय"इति द्वितीयपक्षस्य द्वितीयपक्ष इत्यर्थः ॥ तमेवाह—। [e]"यत्र सर्वप्रकारेणे"ति ॥

मू॰ "तदित्थं (⁴), यदि नाम वादिप्रतिवादिमध्यस्थमात्रस्य दूषणादिसत्तावगमः कथाकालमात्रे तै(⁵)रबाध्यमानः कथाङ्गत्वेनाभ्युपेयते तदा [b]किमायातं सर्वप्रकाराबाधिततत्सत्त्वावगमाधत्ततत्सत्ताभ्युपगमकथाङ्गतानङ्गीकारस्य(⁶) । [c]कतिपयप्रतिपत्तृ–कतिपयकाल-तथात्वावगमादेव प्रायेण लौकिको व्यवहारः प्रतीयते, तादृशश्चायं सत्त्वावगमः कथाङ्गम् । [d]एतत्तदुच्यते(⁷)–[e]व्यावहारिकीं प्रमाणादिसत्तामादाय

---

(१) प्रमाणादिसत्तास्वीकारोऽपीत्यर्थः ।

(२) प्रमाणादिसत्ताविशिष्टाऽवगमनिष्ठकारणताग्राहकं मानं विशेषणीभूतामपि कारणत्वेन विषयीकरोतीत्यर्थः ।

(३) 'अभ्युपगमः'–इत्यापाततः कीर्तनं, प्रमाणादिसत्तापि कथाहेतुरिति तु मार्थः । यद्वा पूर्वं प्रमाणादिसत्ताविशिष्टावगमोक्त्या प्रमाणादिसत्ताभ्युपगमविष्टत्वमेवलक्षणयोक्तं भवतीति ।

(४) 'तद् इत्थं वादिनोच्यते एव, परं न घटते, सर्वप्रकाराबाध्यत्वस्याऽसर्वज्ञविज्ञेयत्वात्'–इति विद्यासागरोक्तोऽर्थः । तत्र तदित्थमित्यस्य तच्चेत्यर्थकस्य पूर्वेणान्वयः, प्रक्रान्तशाङ्करव्याख्यानुरोधेन त्वग्रे इति विज्ञेयम् । क्वचित्तु मूलव्याख्यानयोः 'दिदम्' इति पाठः ।

(५) तैः–वाद्यादिभिरित्यर्थः ।

(६) सदभ्युपगतस्य,–इति शेषः ।

(७) 'तदेतद्विद्वद्भिरपि "स्वप्नवद्व्यवहरेम" इत्यादावुच्यते, न तु मयैव'–इति विद्यासागरः । वयं तु, तत्=तस्मिन्नेतस्मिन्पूर्वोक्तेऽर्थे, एतत्=वक्ष्यमाणम्, उच्यते=उक्तमितीति वदामः ।

विचारारम्भः-इति । तस्माद् 'यादृग्व्यवहारनि
कृतस्तन्मर्यादाऽनेन नोल्लङ्घिता'-इति यद्वादि
व्यवहारे मध्यस्थावगमः, स विजयते; यस्य तु
स्मि नैवं तस्यावगमस्तस्य पराजयः ; यत्र([1])वादि
निग्रहसत्त्वावगमः, स निगृहीतः ; तदितरस्तु
तथा-इत्यादिनियम एव कथारम्भाय ग्राह्यः ।

टी० कथाव्यवहारे([2]) सर्वप्रकारबाधितत्वं([3]) नास्ती([4])त्यत
ह-। [a]"तदित्थमि"ति ॥ ननु प्रमाणादिसत्ताभ्युपगमे त्वं विप्रतिपद्य
च त्वयैवाङ्गीकृतः ? इत्यतआह-। [b]"किमायातमि"ति । सर्वप्रका
ऽबाधितो यः प्रमाणादिसत्तावगमस्तदायत्तः([5]) प्रमाणादिसत्ताभ्यु
कथाङ्गं न भवतीति मदीयः पक्षः, तत्र त्वया न किञ्चिदुक्तमिति भा
*ननु प्रतिज्ञान्तरमिदं यत्प्रमाणाद्यभ्युपगमः कथाङ्गं न भवतीति
ज्ञाय सर्वप्रकाराऽबाधितप्रमाणादिसत्ताऽधिगमायत्तप्रमाणाद्यभ्यु
कथाङ्गं न भवतीति प्रतिज्ञायते * ?-इति चेन्न, पूर्वमपि विशि
प्रतिज्ञानात्, प्रतिज्ञान्तरस्यापि खण्डनीयत्वा([6])च्चेति भावः ॥ न
धित एव प्रमाणादिसत्ताभ्युपगमः कथाङ्गमस्त्वित्यत आह-। [c]"
ये"ति । त्रैकालिकसार्वलौकिकबाधवैधुर्य्याकलनमशक्यमिति का
प्रतिपत्तृमात्रबाधविरह एव प्रवृत्त्यङ्गम्,-इत्यवश्यं वाच्यं, नैतावता
स्थितिरिति भावः। [d]"एतत्तदुच्यते"इति। तदेतदुच्यते इत्यर्थः ॥ [e]"
हारिकीमि"ति । पारमार्थिकत्वस्य दुष्परिच्छेद्यत्वा([7])दिति भावः।

(१) यत्र=प्रतिवादिनीत्यर्थः।

(२) मूलानुरोधात् 'कथाव्यवहारे'-इत्यस्य, कथाव्यवहारकाले-इत्यर्थः।

(३) 'सर्वप्रकाराऽबाधितत्वं नास्ति,-इति तु प्रायो दृश्यमानः पाठः प्राम

(४) प्रमाणादिसत्ताऽवगमस्य,-इति शेषः ।

(५) तदायत्तः=तदधीनः ।

(६) सर्वनिग्रहस्थानखण्डनवेलायां द्वितीयपरिच्छेदे,-इति शेषः । इति
इति । पूर्वमेकदा भावस्योक्तत्वादत्र 'भावः' इति नोचितं, यद्वा प्राथमिकस्य "
इत्यस्य स्थाने 'अर्थः'-इति पाठेन भाव्यम् ।

(७) परिच्छेदः=अवधारणं, तथा च 'दुष्परिच्छेद्यत्वात्'-इत्यस्य, दुरव
त्वादित्यर्थः । अत्र खलु आवश्यकत्वेन दुष्परिच्छेदत्वादिति पाठं तु युक्तमनुम

मू० [a]'अनेन नियमेन वक्तव्यम्'—इत्यस्यायमर्थः,—'अनेन(१) नियमेनोक्तमनेने'ति मध्यस्थावगमस्य विषयीभवितव्यमिति । * [b]नचवाच्यमन्ततस्तदवगमस्यापि(२)सत्ताऽभ्युपेयेति * । तस्यापि(३)सत्ताचिन्तायां तत्सत्तावगमान्तरस्यैव शरणत्वात् । * [c]नचैवमनवस्था * । तदनुसरणाऽवश्यम्भावानङ्गीकारात्, [d]"एवं त्रिचतुरज्ञानजन्मनो नाधिका मतिः"—इति न्यायात् । * नचान्तिमासत्त्वे पूर्वप्रवाहाऽसत्त्वापत्तिः, तथाचाऽवगममादायापि व्यवहरतो न निस्तारः-इतिवाच्यम् * । [e]अस्तु, [f]एवं हि, [g]तथापि त्रिचतुरज्ञानकक्षागवेषणमात्रविश्रान्तेन विचारेण ततः परमननुसरणरमणीयेनैव च समयं बद्ध्वा कथायां मिथः सम्प्रतिपत्त्या प्रवर्त्तनात् ।

टी० ननु प्रमाणादिसत्ता माभ्युपगम्यतां, नियमबन्धश्चेदङ्गीकृत एतावतैव द्वैतापत्तिरित्यत आह—। [a]"अनेने"ति ॥ अवगमसत्तया द्वैतापत्तिं निरस्यति—। [b]"नच वाच्यमि"ति । आपाततः सर्वशून्यतानयनगरप्रवेशे तात्पर्य्यम् ॥ ननु ज्ञानमपि चेन्न परमार्थसत् किन्तु तज्ज्ञानात्तद्व्यवहारसिद्धिरेवं तत्र तत्रापि मन्तव्यं तदाऽनवस्थया कोऽपि व्यवहारो न सिद्ध्येदित्यत आह—। [c]"नचे"ति । भवेदेवं यदि ज्ञानमवश्यं स्वव्यवहारार्थं स्यात्, किन्तर्हि विषयव्यवहारार्थमनुसृतस्य व्यवजिहीर्षायां ज्ञानान्तरमनुश्रीयतां(४)नतु तत्तज्ज्ञानव्यवहारपरम्पराध्रौव्यं, येनाऽनवस्था स्यादित्यर्थः॥ अत्रार्थे भट्टाचार्य्यानुमतिमाह—। [d]"एवमि"ति । प्राकट्यानुमेयज्ञानपक्षे तत्तज्ज्ञानपरम्पराऽनुमानानवस्थापरिहारार्थं भट्टाचार्य्यचरणैरिदमुक्तमिति भावः ॥ ननु ज्ञानस्यापि

---

(१) अनेन वादिना अनेन नियमेनोक्तम्,—इति मध्यस्थाऽवगमस्य विषयत्वेन भवितव्यमित्यर्थः, तथाचाऽवगमसत्तैव सिद्धा, न नियमबन्धसत्तेति भावः ।

(२) तदवगस्यापि=नियमबन्धावगमस्यापीत्यर्थः ।

(३) नियमबन्धविषयकाऽवगमस्यापि प्रातीतिकमेव सत्त्वमित्याह—तस्यापीति ।

(४) वयं तु अनुश्रीयतामित्यस्य स्थाने अनुस्त्रियतामिति पाठः साधुरिति वदामः ।

व्यावहारिकी सत्ता, तथा चान्तिमज्ञानमव्यवह्रियमाणमसत्स्यात् तस्मा
धीनसत्ताकं तत्पूर्वज्ञानमप्यसद्भवेत्?–इत्याशङ्क्य सर्वशून्यताभिप्रायेण
पत्त्या परिहरति–। e"अस्तिव"ति। अस्त्वितीष्टापादनं, सर्वासत्त्वमस्त्व
र्थः॥ f"एवं ही"ति। एवमेव यतो विचारबलात् सेत्स्यतीत्यर्थः। (१)हि-श
किलार्थो वा॥ ननु प्रमाणादिसत्त्वमनभ्युपगम्यापि कथाप्रवृत्तिरितीदा
नवोद्भूयं, तच्च सर्वासत्त्वस्वीकारविरुद्धं, प्रमाणाद्यसत्त्वे विचारप्र
नवकाशादत आह–। g"तथापी"ति॥

सू० a"अन्यथा प्रमाणादिसत्त्वाऽभ्युपगमेपि ज्ञानाऽनवस्थ
याः दुष्परिहरत्वात्।* b"नच वाच्यं–मत्पक्षे स्वरूपस
ज्ञानेन व्यवहारस्य चरितार्थयितुं शक्यत्वात् तज्ज्ञ
नपरम्पराऽननुसरणमुचितं, नत्वेवं त्वत्पक्षे स्वरूप
ता ज्ञानेन व्यवहारस्य चरितार्थता, ज्ञानस्वरूपसत्त्व
ङ्गीकारप्रसङ्गादिति*। स्वरूपसत्त्वमादायापि परिहा
ऽनवस्थाप्रसङ्गस्य स्वप्रकाशप्रस्तावे वक्तव्यत्वात्। c
च त्वत्पक्षे स्वरूपसत्त्वाऽविशेषेपि विज्ञानस्वरूपसत्
परं व्यवहारोपपादिका, न घटादिसत्ता, एवमेव(२)
सत्त्वाविशेषेपि ज्ञानमेवासद् व्यवहारोपपादकं, ना
त्।* d"असच्चोपपादकं च–इति व्याहतम्*?–इति चे
'सदुपपादकम्–इति कुतो न व्याहतम्?'। नहि सदु
पादकम्, असन्न,–इति क्वचिदावयोः सिद्धम्।* e
तदसत्त्वाविशेषात्कार्यस्याऽन्यदापि जन्मप्रसङ्गः*

(१) 'यत'-इत्येतदर्थं हि-शब्दमभिधायेदानीं किलार्थं आह-हीति।
(२) मत्पक्षे,-इति शेषः।

टी० ननु प्रमाणाद्विसत्त्वे कुतो नाभ्युपगम्यत इत्यत आह—। [a]"अ-नवस्थे"ति। चित्रतुरङ्गकक्षाविश्रान्तिरेव तत्रापि शरणमनवस्थाभयादित्यर्थः॥ ननु सत्यत्वे ज्ञानं स्वरूपसदेव विषयव्यवहारसमर्थं, त्वन्मते स्वरूपाऽसतो-ज्ञानस्य ज्ञानान्तरमेव सत्त्वमिति तज्ज्ञानसत्त्वार्थमपरापरज्ञानाऽनुसरण-मवश्यमित्यनवस्थेति वैषम्यमाशङ्क्य परिहरति—। [b]"न च वाच्यम्" इति। अज्ञायमानतायां ज्ञानस्य स्वरूपसत्तापि न स्यात् "को(1)ऽनुभवः ब्रूते सती सा वित्तिः? असत्येव किं न स्यात्"—इत्यादेः स्वप्रकाशप्रस्तावे वक्ष्यमाणत्वात् न वैषम्यमित्यर्थः॥ ननु ज्ञानस्याऽसत्त्वे कथं तदधीनो व्यवहारः? अथा-ऽसदपि व्यवहारहेतुस्तदा सदैवासतो व्यवहारः स्यादविशेषादित्याश-ङ्क्याह—। [c]"यथाचे"ति॥ [d]"असत्त्वे"ति। उपपत्तिकारणमुपपादकं, कारणं च नियतप्राक्कालसदिति व्याघातः॥ कारणं (2) नियतप्राक्सदित्येव नास्ति, कुतो व्याघात इत्याह—। [e]"सदि"ति॥ ननु यद्यसत्कारणं तदै-तत्कालीनोत्पत्तिको घटः पूर्वमेव कथं नोत्पन्नः? इत्याह—। [f]"नन्वि"ति। एतद् (3)घटोत्पत्तिक्षणभिन्नाः क्षणा यद्येतद्घटयावत्कारणाऽधिकरणक्ष-णाऽव्यवहितोत्तरत्वविशिष्टाः स्युः, एतद् घटोत्पत्त्यधिकरणानि स्युरि-त्यापादनार्थः। यद्वा (4) एतद्घटोत्पत्तिक्षणपूर्वक्षणो यद्येतद्घटसामग्र्य-व्यवहितोत्तरक्षणः स्याद् एतद्घटोत्पत्तिक्षणः स्यादित्यापाद्यम्॥

---

(1) कोऽनुभवः ब्रूते=अनुभावयति यत् सत्येव सा वित्तिरिति? न कोऽपि, तथ्चाऽनुभावकाऽभावादसत्येव सा वित्तिः किं न स्यादिति वक्ष्यमाणग्रन्थार्थः।

(2) कारणं यन्नियतप्राक्सदेव, नाऽसदित्येव नाद्यापि निर्व्यूढमिति तदादाय यं व्याघातः स्यादित्यर्थः। यद्वा कारणं=नियतप्राक्सत्, तथा च यथा ऽसत्सदिति नास्ति तथा नियतप्राक्सच्चियतप्राक्सदित्येव नास्ति कुतोऽस्मान्प्रति व्याघातः।

(3) यथाश्रुतमौलिकार्थव्याख्याने कार्यस्याऽन्यदा जन्मप्रसिद्ध्यभावादप्रसिद्धापा-दनं दोष इति तदुद्धाराय विशिष्टमापादनार्थमाह—एतदिति. वस्तुगत्या एतद्घटो-त्पत्त्यधिकरणक्षणा एतद्घटकारणाऽव्यवहितोत्तरत्वविशिष्टः. यदि तु एतद्घटोत्प-त्तिक्षणभिन्ना अपि क्षणा एतद्घटकारणदण्डाद्यव्यवहितोत्तरत्वविशिष्टाः स्युस्तदैतद्-घटोत्पत्त्यधिकरणानि स्युरित्यर्थः।

(4) पूर्वं घटोत्पत्तिक्षणभिन्नेषु यावत्सु क्षणेषु घटाधिकरणत्वमापादितमिदानीं टाऽव्यवहितप्राक्क्षण्यैकक्षणे तदापादयति—यद्वेति।

मू॰ "न,कार्यस्या(१)द्यसत्ताक्षणे इवान्यदापि सामग्र्य
त्त्वाऽविशेषात् तथापि किं नान्यदा कार्यजन्म।, [b]
न मम तदानींतनं सामग्र्यसत्त्वं तदानींतनस्य कार्य
न्मनो नियामकं, किंतु ततः प्राक् सामग्रीसत्त्वं,
थादर्शनात् *, ?। [c]तर्हि ममापि कालान्तरस्थ(२)प्र
तदसत्त्वं तदातनकार्यजन्मनो नियामकं, तथादर्श
देव। * [d]मम तु तदव्यवहितोत्तरत्वं तदा कार्यज
नो नियामकम् * ?–इति चेन्न,

टी॰ कार्योत्पत्तिक्षणे सामग्री त्वयापि नेष्यते प्रागभावस्य त
कस्याऽभावात्, तथाच यथा सामग्रीविरहिणि तस्मिन्क्षणे कार्यं,
क्षणान्तरेपि कथं न स्यादविशेषादित्याह–। [a]"न, कार्यस्ये"ति॥
न्तराणां सामग्रीविनाकृतत्वात् त्वया घटोत्पत्त्यधिकरणत्वमापाद्यते
तदा स्याद् यदि सामग्र्यसत्त्वं कार्योत्पत्तिनियामकमस्माभिरुक्तं
नचैवं, किन्तु कार्य्याव्यवहितपूर्वक्षणसामग्रीसत्त्वमिति शङ्कते– [b]।"
ति॥ तस्मिन्(३)क्षणे नियमतः कार्योत्पत्तिदर्शनात् यथा पूर्वक्षणसा
सत्त्वं तव नियामकं, तथा ममापि नियतकालकार्यदर्शनात् पूर्वक्षण
ग्र्यसत्त्वमेव किं न नियामकं स्यादिति परिहरति–। [c]"तर्ही"ति।
ग्रीसत्त्वं पूर्वक्षणमात्रे, तदसत्त्वं च सार्वत्रिकमिति महद्वैषम्यम्, त
कार्यमप्यसदेवेति(४)हृदयम्। पूर्वापादनं तु तदा स्याद् यदि घटोत्प

(१) तथापि सत्कारणवादिनो मते किं कारणसामग्रीघटकस्य प्रागभावस्य
वात्कार्य्यजन्म ? वा पूर्वभाविसामग्रीसत्त्वात् ? आहोस्वित् सकलसामग्र्यव्यवहित
त्वात् ? ; तत्राद्ये आह–कार्य्यस्येति।

(२) कालान्तरस्थं तदसत्त्वमित्यस्यैव पूर्वक्षणसामग्र्यसत्त्वमिति विवरणमुत्
कामिषेण शङ्करेण निर्णीतं भवति। एवमन्यत्रापि प्रायोऽस्मिन् व्याख्याने उत्था
पैवाऽर्था अवधारणीयाः।

(३) तस्मिन् क्षणे = कार्य्यक्षणे।

(४) अयमाशयः–भवेदिदं वैषम्यं यद्येतादृशं कार्यस्याप्यसत्त्वं मया नोच्येत,
पारमार्थिकत्वधर्मपुरस्कारेण कार्य्यकारणयोरुभयोरप्यसत्त्वमेव, व्यावहारिकत्व

णातिरिक्तानामपि क्षणानां याव(१)द्धटप्रयोजकोत्तरत्वं मयाऽभ्युपगम्येत, नत्वेवं, किन्तु घटजन्मक्षणस्यैव, तत्पूर्वक्षणवर्त्तिसामग्र्यसत्त्वस्यत्र घटप्रयोजकत्वेन मयाऽभ्युपगमात् ॥ न वयं भिन्नकालीनं सामग्रीसत्त्वं कार्यजन्मनियामकं ब्रूमोऽपि तु कार्योत्पत्तिसमानकालीनमेव सामग्रीसत्त्वाव्यवहितोत्तरत्वं, तथा च न साम्यमित्याह—। [d]"ममत्वि"ति ॥

सू० "[a]समसमयत्वाद्[b]ऽऽगन्तुकत्वा(२)च्चाऽविशेषेण नियम्यनियामकव्यवस्थाऽनुपपत्तेः ।

टी० [a]"समसमयत्वाद्दि"ति । यदेव कार्योत्पत्तिक्षणत्वं तदेव सामग्र्युत्तरक्षणत्वमिति कथमभेदेनैव नियम्यनियामकभावः, समयस्य=क्षणस्य, समत्वादेकत्वादित्यर्थः । * नचोपाधिभेदाद्भेदः * । तथा सति दण्डित्वकुण्डलित्वाभ्यां देवदत्तो भिद्येत, "देशकालौ(३)कामं भिद्येयातां नतु तदुपरक्तस्वभावः पद्मरागो मणिः"—इति च तत्रैव वाचस्पतेरभिधानादिति भावः । यद्वा तुल्यकालयोः सामग्र्युत्तरक्षणत्वकार्यक्षणत्वयोः सव्येतरविषाणवन्नियम्यनियामकभावाऽभावादित्यर्थः । यद्वा समयः=व्यवस्था, तेन समसमयत्वान्नियम्यनियामकयोः समव्यवस्थत्वात्, तथाच—कार्यनियामकत्वेनाभिमतस्य सामग्र्युत्तरत्वस्य नियामकान्तरं वाच्यमित्यर्थः । एतदेवाग्रे "अन्यथा यद्विशेषान्तरं तदपि"—इत्यादिना स्फुटयिष्यति । यद्वा, समयः=सङ्केतः(४), तथाच कार्यक्षणसामग्र्युत्तरक्षणयोरेकार्थवाचकत्वेन तदुपस्थाप्ययोर्घटकलशपदोपस्थाप्ययोरिव न नियम्यनिया-

---

कदाचित्कार्य्यस्य सत्त्वोपलम्भात्तदव्यवहितप्राक्क्षणमात्रे परमार्थतोऽसतोऽपि कारणस्य व्यावहारिकं सत्त्वं मयाप्यङ्गीकरणीयमेवेत्यतो न वैषम्यमिति ।

(१) यावत्त्वस्य प्रयोजके ऽन्वयो न तु घटे ।

(२) उत्तरत्वमपि नियामकान्तरपूर्वकं चेदनवस्था, न चेत्स्वयमव्यवस्थितं कथमन्यद्व्यवस्थापयेदित्याह—आगन्तुकत्वादिति"—इति प्रगल्भमिश्राः श्रीदर्पणे ।

(३) देशकालौ कामं = यथेष्टं भिद्येयातां नतु देशकालभेदेन पद्मरागो मणिर्भिद्यते इत्यर्थः ।

(४) सङ्केतः=वाच्यवाचकभावः सम्बन्धः, शक्तिरिति यावत् ।

मकभाव इत्यर्थः ॥ b"आगन्तुकत्वादि"ति । अव्यवस्थितोपनिपातित्वा आकस्मिकोपनिपातिन्यतिप्यादावागन्तुकपदप्रयोगात्, तथाचाऽऽगा काऽऽकस्मिकी सामग्री स्वोत्तरत्वेन कार्यजन्म कथं नियमयेदित्यर्थः यद्वा प्रागभावेतर(१)यावत्कादाचित्ककारणप्रागभावाऽनाधारः कार्यप्रा भावाधारः क्षणः सामग्रीत्युच्यते, कार्यप्रागभावः कार्यानुत्पादएव, ता च-'कार्यानुत्पादः कार्योत्पादं नियमयति'-इति पर्य्यवसितं, तच्चाऽ युक्तं, कार्यानुत्पादस्य कार्य्योत्पादं प्रति आगन्तुकत्वात्=उदासीनत्वा उदासीनो ह्यागन्तुक इत्युच्यते इत्यर्थः। तथाच समसमयत्वाऽऽगन्तु त्वाभ्यामविशिष्टयो(२)स्त्वदभिमतनियम्यनियामकयोर्न नियम्यनियाम भाव इति समुदायार्थः । अन्ये तु "आगन्तुकत्त्वादन्यथासिद्धत्वादि वा, आगन्तुकत्वादकॢप्तनियामकत्वादिति वाऽर्थः"-इत्याहुः । यद्य समसमययोरप्यागन्तुकयोरपि रूपरसयोर्वन्हिधूमयोरिव नियम्यनियाम कभावो दृष्ट एव, तथापि कार्यस्याऽसत्त्वमेवेति हृदयम् ॥

मू० "तस्मात् 'अन्यदास्थाया(३)एव सामग्र्यास्तदा का जन्मनियमोऽभ्युपेयः, तथा दर्शनात्'-इत्येव वाच्य तथाच समः(४)समाधिः । * b'तथापि कार्य(५)जन्मका स्य को विशेषः*?।c'कार्यजन्मैव। d'अन्यथा यद्विशेषान्त

(१) कार्य्यप्रागभावाधारः क्षणः सामग्रीत्येतावन्मात्रोक्तौ दण्डादिकारणा भावक्षणस्यापि घटादिसामग्रीत्वं स्यादतउक्तं यावत्कारणप्रागभावाऽनाधारइति, त यावदन्तर्गतानां देशकालादीनां प्रागभावस्यैवाऽभावात्तदनाधारः क्षणः सर्वे स्तीति पुनरपि स एव दोषस्तदवस्थ इत्यत उक्तं कादाचित्केति, कादाचित्कं का मनादिप्रागभावोऽपीति पुनरुक्तदोषाऽनुद्धार इति प्रागभावेतरेत्युक्तम् ।

(२) अविशिष्टयोः=तुल्ययोः । (३) अन्यदास्थायाः = पूर्वक्षणवर्तिन्या

(४) यथा तव भिन्नकालीना सामग्री नियामिका तथा ममापि भिन्नकालीन मप्यसत्त्वं किं न नियामकं स्यादिति समः समाधिरित्यर्थः ।

(५) "यद्यपि कारणमिव कार्य्यमप्यसदेवेति तत्र समयविशेषप्रश्नो न यु तथापि प्रतिबन्दिस्थानेनैव साधनस्योपक्रमाद्विशेषप्रश्नाद्ध - कार्य्यजन्मेति"-इति प मिश्राः शांकरीये ।

(६) विशेषान्तरं=सामग्र्युत्तरत्वादि ।

तदपि विशेषान्तरवतः कालस्य स्यादित्यपर्य्यवसानमेव पर्य्यवस्येत् । * तथापि(1)तत्कालस्यानुगतं किं रूपम् * ?,–इति चेन्न, 'रूपान्तर(2)वतोपि किं तद् ?'–इत्यस्यापि पर्य्यनुयोगस्यापत्तेः(3) ।

टी० [a]"तस्माद्धि"ति । सामग्र्युत्तरक्षणत्वस्य नियामकत्वे खण्डिते भिन्नकालापि त्वया सामग्र्येव नियामिका वाच्या, तथाच भिन्नकालसामग्र्यसत्त्वमेव किं न नियामकमिति मम: समाधिरित्यर्थः ॥ ननु क्षणान्तरेभ्यः कार्यजन्मक्षणस्य वैलक्षण्यमवश्यमभ्युपेयं, तच्च वैलक्षण्यं न तावत्सामग्र्यसत्त्वं, तस्य क्षणान्तरसाधारण्यात्, तथाच सामग्र्युत्तरक्षणत्वमेव तथा वाच्यम् क्षणान्तरव्यावृत्तत्वादिति तदेव नियामकमित्यनुशयानः पृच्छति। [b]"तथापी"ति ॥ उत्तरम्–। [c]"कार्य्ये"ति ॥ विनिगमकमाह–। [d]"अन्यथे"ति । सामग्र्युत्तरत्वेपि विशेषान्तरमनुसरणीयम्, एवं तत्रतत्रापीत्यनवस्थेत्यर्थः । यद्यपि कार्य्यजन्मकाले सामग्र्युत्तरत्वं, तत्र च सामग्री, तस्यामपि तत्सामग्रीत्यपर्य्यवसानमेवेष्टं प्रामाणिकत्वात्, * नच कार्यजन्मकालगता एव सर्वे विशेषा अभिमताः नच सामग्रीपरम्परायास्तथात्व(4)मिति वाच्यम् *, सामग्रीपरम्पराया अपि परम्परया कार्यजन्मकालस्यैव विशेषत्वात्; अन्यथा "कार्यजन्मकालस्य कार्य्यजन्मैव विशेषः"–इति त्वदुक्तमपि न निर्वहेत, तत्रापि विशेषान्तराऽनुसरणौचित्यात्, तथापि कार्यमप्यसदित्यत्रैव हृदयम् ॥

---

(१) कार्य्यजन्मकालानामुपसङ्ग्राहकं रूपं पृच्छति—तथापीति ।

(२) परिहरति – रूपान्तरेति । अयमाशयः – यन्नियामकं रूपान्तरं वक्तव्यं तस्यापि रूपान्तरसापेक्षत्वेऽनवस्था, अन्ततोगत्वा कस्यापि रूपान्तराऽनपेक्षत्वे आदावेव तत्स्वीकार्य्यं, तच्च जनिसम्बन्धित्वमेवेति ।

(३) { असतः कारणभावो भवतीति समर्थितं तावत् । न च सत एव तु सिद्ध्यति कारणतेति प्रदर्श्यते तदनु ॥ }

(४) तथात्वम्=निरुक्तोत्तरोत्तरसामग्र्यात्मकविशेषवत्त्वम् ।

सू० "किञ्च ।

अन्तर्भावित[1]सत्त्वं चेत्कारणं तदसत् [b]ततः ।
नान्तर्भावितसत्त्वं चेत्कारणं तदसत् ततः ॥ ४ ॥
[d]तथा हि अन्तर्भूतसत्त्वं यदि कारणत्वं तदा स्वविशे-
षे स्ववृत्तिरंशतः स्वाश्रयत्वमापादयति ।

टी० असतः कारणत्वमुपपाद्य सतः कारणत्वं खण्डयति [a]"किञ्च" इति । कारणे सत्ता विशेषणम् ? उपलक्षणं वा ? । यदि विशेषणं, तदा सत्तायामपि कारणत्वमित्यायातं, सत्तायां च न सत्तेति असदेव कारणं प्राप्तम् ॥ [b]"तत" इति । सत्ताविशिष्टे कारणत्वाऽभ्युपगमादित्यर्थः । उपलक्षणत्वे त्वसदपि कारणं प्राप्तं, सत्तायाः कारणकोटिबहिर्भावात् ॥ [c]"तत" इति । सत्ताया उपलक्षणत्वाऽभ्युपगमादित्यर्थः ॥ यद्वा कारणमित्युभयत्र भावप्रधानो निर्देशः, तथाच सत्तायां कारणत्वं वर्त्तते ? नवा ? इति विकल्पार्थः । आद्ये सदपि कारणं, सत्तायाः सत्ता विरहेणाऽसत्वात् । द्वितीये सत्तया सदाकाराऽनुगतप्रत्ययोपि नाऽवगमनीय इति तन्मात्रप्रमाणिकायाः सत्ताया विलोपे सर्वकारणमसदेव प्राप्तम् । यद्वा कारणं=कारणत्वम्, अन्तर्भावितसत्त्वं=व्यापकीभूतसत्ताकम् न वा ? तथाच कारणत्वं सत्ताव्याप्यं ? न वा ? इति विकल्पार्थः । अपरार्थे सत्तायां सत्तानिवृत्त्या कारणत्वमपि निवर्तते, इति अनुगतप्रत्ययस्य कारणत्वाभावात् प्रमाणाऽभावेन सत्ताविलोपे सर्वकारणमसदेव प्राप्तम् । अन्त्ये सत्तामपहायापि कारणत्वं वर्तते इति त्वयैवासत्कारणमभ्युपगतमित्यर्थः ॥ वार्त्तिकार्थं प्रपञ्चयति-। "[d]तथाही"ति ॥

---

(1) अन्तर्भाविता = अन्तः प्रवेशिता (विशेषणीभूता इतियावत्) सत्ता यस्य तदन्तर्भावितसत्त्वं, तच्चेत्कारणं, तदा सत्ताविशिष्टे सत्ताऽसम्भवात्कारणमसदेव सत्तासमवायात्सद्व्यवहारोपगमादित्यर्थः । अन्तर्भावितसत्त्वः कारणं न, किन्तूपलक्षितमिति चेत् (केचित्त्वत्राऽलुक्समासमिच्छन्ति) ततोऽपि कारणकोटौ सत्ताऽप्रवेशात्कारणमसदेवेति श्लोकार्थः ।

सू० "विशिष्टस्यार्थान्तरत्वे(१)पि च स्वस्मिन्स्ववृत्तिव्यतिरेकवत्स्वविशिष्टे स्ववृत्तिव्यतिरेकनियमदर्शनात् न सैव सत्ता तस्मिन्निति [b]'अन्यस्या विशिष्टवृत्त्यभ्युपगमे तामनिवेश्य कारणत्वमभ्युपगन्तुः सर्वथैवासत्कारणं पर्यवस्यति, [c]'अपराऽपरसत्तानिवेशने चाऽपर्यवसानमेव।

टी० ननु सत्ताविशिष्टे दण्डादौ कारणे सत्ता वर्तते चेत्कथमात्मा-यः(२)इत्यत आह—। [a]"'विशिष्टस्ये"ति। स्वस्मिन्स्वं वर्तते इति यथा रुद्धं, तथा स्वविशिष्टे स्वं वर्तते इत्यपि विरुद्धमेव, विरोधप्रयोजक-ाऽदर्शनस्योभयत्राऽविशेषादित्यर्थः ॥ ननु स्वविशिष्टे स्वं मावर्तिष्ट, भिन्नया द्वितीयया सत्तया प्रथमसत्ताविशिष्टानां सत्त्वं, सत्त्वाच्च ारणत्वमुपपत्स्यते? इत्यत आह—। [b]"अन्यस्या" इति। प्रथमसत्तायाः किञ्चित्करत्वेपि तत्तुल्यतया द्वितीयसत्तामप्यनिवेश्यैव त्वया कारणत्वं ाच्यम्(३)तथाच न प्रथमया न वा द्वितीयया सत्तया सतां कारणत्व-मिति सर्वथैवासत्कारणमिति भावः ॥ ननु स्वविशिष्टे स्ववृत्तावात्मा-यः, अन्योन्यविशिष्टेऽन्योन्यवृत्तावन्योन्याश्रयः, इति पूर्वपूर्वसत्ताविशिष्टा-रापरसत्तया सत्त्वात्कारणं च स्यादिति कथमसत्कारणमित्यत आह—। [c]"अपरापरे"ति। उत्तरोत्तरसत्तास्वप्युत्तरभावितसत्त्वं चेदित्यादिविकल्प-दर्थनया क्वापि पर्यवसानं न स्यादित्यर्थः ॥

सू० *"नच सत्ताभेदानन्त्यमस्त्येवेत्यपि पादप्रसारिका निस्ताराय*। सत्ताभेदे हि सद्बुद्धिव्यवहाराऽनुगमसमर्थनलङ्घिनः प्रथमापि सत्ता नस्याद् इति वृद्धिमिच्छतो मूलमपि ते नष्टमिति हा! कष्टनरम्। * [b]'नच स्वरूपस-

(१) विशेषणविशेष्यतत्सम्बन्धेभ्योऽतिरिक्तत्वपक्षेपीत्यर्थः।

(२) अत्र "विशिष्टस्य विशेषणीभूतसत्तादितोऽतिरिक्तत्वस्य मयाऽभ्युपगन्तव्यात्'--इति हेतुः पूरणीयः।

(३) वचनप्रकारस्तु--'स्वभिन्नया तृतीयसत्तया द्वितीयसत्ताविशिष्टानां सत्त्वं त्वाच्च कारणत्वमुपपत्स्यते'--इति।

त्तोपगमाय स्वस्ति *। भिन्नानप्यनुगत(१)बुद्ध्याधा-
पदेऽभिषिञ्चता त्वया हि जातिमात्राय जलाञ्जलि-
र्वितीर्येत। c"मा भूदनुगतिः स्वरूपसत्त्वस्य"-इति
वदन् तद्धर्मिणीं कारणतां कथमनुगमयितासीति

टी० ननु बीजाङ्कुरपरम्परावत्सत्तापरम्पराऽस्तु को दोषः? इत्यत
आह-। a"'नचे"ति। यथा तावत्यः सत्ताः सत्तामन्तरेणैव सत्य-
दण्डादयोऽपि सत्तामन्तरेणैव सन्तः सन्तु किमाद्ययापि सत्तया।
तावतीषु सत्तास्वेका काचित्सत्ता वर्तते यया तासामनुगमः, तस्याः
कस्याः(२) किमनुगमकेन सत्तान्तरेणेति वाच्यम् *। तर्हि सती(३)न
तदसत्त्वे च तासामसत्त्वात् तदाऽऽश्रयपर्यन्तमसत्त्वमित्यसदेव
पर्यवसन्नमिति भावः। यद्यपि स्वविशिष्टे स्वं वर्त्तते एव विरोधाभा-
*नचादर्शनं* सर्वत्र तथैव दृष्टत्वात्। नहि स्वाऽविशिष्टे क्वचित्स्ववृत्ति-
यदि च स्वविशिष्टे स्वं न वर्त्तेत, तदा स्वविशिष्टमेव न स्यात्स्ववृत्ते-
तत्स्वविशिष्टम्, अन्यथा दण्डिनि दण्डवत्कुण्डलिनि कुण्डलवत् कुण्ड-
दण्डेऽपि स्यात्। *एवं तर्हि दण्डेऽपि दण्डः स्यात्*?। न, आपादकाभा-
*विशिष्टवृत्तित्वमेवापादकम्*?, इति चेन्न, यद्विशिष्टवृत्ति तद्विशेषणमि-
नियमाभावात्, व्यभिचारस्य(४)दर्शितत्वात्। *तत्र(५)दण्डकुण्ड-

(१) अनुगतबुद्ध्यादिराधीयते अनेनेत्यनुगतबुद्ध्याद्याधानं, तत्पदे=त-
इत्यर्थः।

(२) 'एकस्याः'-इति सावधारणं हेतुगर्भं विशेषणम्, एकत्वादेवेत्यर्थः।

(३) यदि सर्वसत्तास्वनुगतैकसत्तायां सत्तान्तरं न स्यात्तर्हि सा सत्येव न स्यात्,
तदसत्त्वे तदाधारभूतानां प्रथमसत्तानामप्यसत्त्वं तदसत्त्वे च तदाश्रयाणां दण्डा-
कारणानामप्यसत्त्वमित्यर्थः। न च सर्वसत्तास्वनुगतैकसत्ता स्वात्मकसत्तयैव ...
तथा सति प्रथमास्वेव तत्स्वीकरणीयतया तत्त्यागे मानाऽभावात्।

(४) सर्वत्र स्वाविशिष्टे एव विशेषणं वर्त्तते, न चैतावता स्ववृत्तित्वं ...
( यद्यपीत्यत आरभ्य स्यादित्यन्तं ) व्यभिचारस्य दर्शितत्वादित्यर्थः।

(५) ननु विशेषणं सर्वत्र स्वाऽविशिष्टे एव वर्त्तते, नचैवं सति कुण्ड-
दण्डेऽपि स्यादिति वाच्यम्, दण्डादीनामुपलक्षणत्वेन विशेषणत्वानङ्गीकारा-
आह-तत्रेति।

विशेषणत्वं, किन्तूपलक्षणत्वम्*? -इति चेत्तर्हि सत्ताप्युपलक्षणमस्तु, यथा चोपलक्षणेनापि दण्डेन पुरुषो दण्डी, तथा सत्तयापि तादृश्या कारणं सदस्तु। वस्तुतो विशेषणत्वेपि न दोषः, नहि विशेष्यगतधर्मवत्त्वं विशेषणत्वं किन्तु स्वकालनियत[1]व्यावृत्तिबोधजनकत्वं, प्रत्याय्य[2]व्यावृत्त्यधिकरणतावच्छेदकत्वे सति व्यवच्छेदकत्वं वा, तच्च[3]विशेष्यवृत्तिधर्मविरहेपि समानम्। यत्र[4]संयोगलक्षणा वृत्तिर्दण्डादौ तत्र कथञ्चिद्विरोधोपसंहारेपि समवायलक्षणवृत्तौ स्वविशिष्टे एव स्ववृत्तिरभ्युपगन्तव्या, तत्र स्वाऽविशिष्टदशाया अभावात्, गोत्वाऽविशिष्टे महिषादौ गोत्ववृत्तिप्रसङ्गात्। तथा च तत्रावश्यं स्वविशिष्टे स्ववृत्तिरङ्गीकर्त्तव्या।*तत्र केवले वृत्तिः*? -इति चेन्न[5], केवलस्यापि स्वविशिष्टत्वात्। नहि तत्र स्वं न विशेषणम्।*ननु [6]सत्ताय सत्ताविरहात् कथं साऽनुगतप्रतीतिकारणम्*? -इति चेन्न, सत्तव केवलमसती कारणमिति न, किन्त्वर्थभावादिरप्यसदेव कारणम्।*तर्हि सत्कारणं, नत्वसदिति कोयं तव सिद्धान्तः*? -इति चेत्, सोपाख्यं कारणं, नतु निरुपाख्यमलीकमित्यवेहि।*तर्हि सत्तास्थाने उपाख्यामावेश्य उपाख्या-

(१) औदासीन्येन व्यावृत्तिबोधजनकत्वमुपलक्षणस्याप्यस्त्यतः स्वकालनियतत्वेन बोधो विशेषितः।

(२) पूर्वोक्तविशेषणलक्षणस्योपाधावतिव्याप्तिमभिप्रेत्य लक्षणान्तरमाह प्रत्याय्येति। प्रत्याय्या = ज्ञाप्या या व्यावृत्तिस्तदधिकरणता दण्डादेस्तदवच्छेदकत्वं दण्डादेव विशेषणस्य, नतूपाधेरुपलक्षणस्य वेति नातिव्याप्तिः।

(३) तदेतल्लक्षणं विशेषणे विशेष्यगतधर्मस्याभावेपि सति समनुगतमित्याह-तच्चेति।

(४) ननु "नहि स्वाऽविशिष्टे क्वचित्स्ववृत्तिर्दृष्टा"--इत्यस्य त्वदुक्तवचसोऽव्यावृत्तित्वेनाऽभिमतसंयोगादौ व्यभिचाराद्विरोधस्तदवस्थ इत्यत आह-यत्रेति। संयोगेन लक्ष्यते=ज्ञायते या सा संयोगलक्षणा, संयोगाऽवच्छिन्ना वृत्तिरिति यावत्। वृत्तिवृत्तिताऽवच्छेदकयोः समनियतत्वेनाऽभेदोपचारात् संयोगलक्षणा वृत्तिरित्युक्तम्। "समवायलक्षणवृत्तौ"-इत्यत्रापि ज्ञेयम्।

(५) 'केवले वृत्तिः'-इत्यत्र केवलशब्देन किं सर्वथा गोत्वादिविशेषणाऽसंस्पृष्टत्वं?, वा तत्संस्पृष्टम्?। आद्ये महिषादावपि गोत्ववृत्तिः स्यादित्येतद्दूषणं निधायाहेति, द्वितीये तु पूर्वोक्तमेव स्मारयति-केवलस्यापीति।

(६) नन्वेवं स्वविशिष्टे स्ववृत्तित्वमुपपाद्य त्वया दण्डादीनां कारणत्वं व्यवस्थापि, सत्तायां तु सत्ताविशिष्टत्वस्याप्यभावात् कथं कारणत्वं स्यादिति खाण्डनिका-ण्डनिकं शङ्कते-नन्विति।

विशिष्टं निरुपाख्यमेवेति पूर्ववद(१)ावर्तनीयम्०?-इतिचेन्न, आस
क्रियमाणे एव व्याघातात्। नह्युपाख्याविशिष्टं निरुपाख्यं वक्तुमपि शक्
उपाख्याविशिष्टत्वेनैवोपाख्यातत्वात्, तच्चोपाख्या हि नाम, तथाचा
धाना(२)नभिधानयोर्जितं नैयायिकैरिति, तथापि(३)दण्डादौ स
कारणकोटौ न प्रविशतीति हृदयम्॥ ननु च सत्ताविरहि(४)
सत्ता स्वरूपसत्येव, दण्डादिरपि सत्ताबहिर्भावेण कारणमस्तु स्व
त्तायाः स्वरूपमात्रनिबन्धनत्वात्, प्राभाकरादिभिस्तथैवाङ्गीकाराच्चे
आह-।ᵇ"नचे"ति। स्वरूपसत्त्वस्य प्रतिस्वं विश्रान्तत्वेनाऽननुगत
अनुगतसद्व्यवहारविलोपप्रसङ्गात्, अननुगतेनैव चाऽनुगतधीजनने
दिकमपि नस्यादित्यर्थः॥ नन्वनुगमाभावेपि स्वरूपसत्तया सत्कारण
तावदायातं, तदेव च मया साधयितुमुपक्रान्तमित्यत आह-।
दिति। कारणताया अनुगमः त्वदभ्युपगतो न स्यात् स्वरूपसत्ताया
गमकत्वेनाभ्युपेताया अननुगतत्वात्, सत्ताजातेश्च खण्डितत्वादित्यं

**मू०** ᵃकिञ्च, स्वरूपसत्त्वं स्वरूपात् घटाद्यात्मनो नाधि
सतोपि स्वरूपं स्वरूपमेव, नह्यसन् घटादिर्न घटा
तथा सति(५) घटादिर्न'-इत्यपि न स्यात्, असतो

---

(१) पूर्ववत् "अन्तर्भावितसत्त्वं चेत्कारणं तदसत्ततः"-इति कारिकांश
णैव-'अन्तर्भावितोपाख्यं चेत्कारणं तदसत्ततः, नान्तर्भावितोपाख्यं चेत्कारण
ततः' इत्यावर्त्तनीयमित्यर्थः।

(२) अभिधाने निरुपाख्यत्वव्याघातः, अनभिधाने नैयायिकाऽभिमतस
कारणत्वसिद्धिरिति विवेकः।

(३) 'तथापि'-इत्यस्य 'यद्यपि स्वविशिष्टे स्वं वर्तते एव' इति दूरस्थ
यद्यपि शब्देनाऽन्वयः।

(४) जात्यात्मकसत्ताविरहिणीत्यर्थः।

(५) तथा सतीति। यथा 'घटः सन्'-इत्यत्र घटसत्त्वयोः सामान
ण्योपलम्भाद्घटः सत्त्वास्योयते, तथा 'घटोऽसन्'-इति सामानाधिकरण्योपल
घटोऽपि स्वीकार्य्यः, अन्यथा 'घटोऽसन्'-इति सामानाधिकरण्यमेव न स्यादि
लम्भादिसंमतोर्थः। विद्यासागरास्तु "अप्रसिद्धप्रतियोगिकनिषेधायोगादसतः
प्रतियोगित्वेनाऽसन् घटादिरेष्टव्यः"-इत्याहुः। तत्र मन्ये प्रगल्भोक्तोऽर्थं मूल
शब्दस्यैवकारार्थकत्वकल्पनाप्रयुक्तगौरवाद्विद्यासागरोक्तमेवरम्यमिति।

दित्वात् । [b]अथ सदपि सत्तामनन्तर्भाव्य कारणं, तदानीमसदपि तत्तथास्तु, सत्त्वासत्त्वयोः कारणकोट्यप्रवेशाऽविशेषात् । [c]अथ*न सत्ता कारणकोटिनिविष्टा, किन्तु कारणत्वं सत्त्वं, नियतपूर्वसत्तां हि कारणतां मन्ये*?—इति मन्यसे, [d]तर्हि मत्पक्षेपि सैव कारणतस्तु।*[e]तर्हि कारणस्य सत्तामभ्युपगतवानसीति घट्टकुट्यां(१)प्रभातम् *?—इति चेन्न, भावाऽनवबोधात्,

टी॰ घटस्य च निरूप्यमाणं घटस्वरूपसत्त्वं घट एव पर्यवस्यति, तथाच घटः=कारणमित्याऽऽयातम्, असन्नपि घटो घट एव,—इति मत्पक्षात् त्वत्पक्षे न कश्चिद्विशेष इत्याह—। [a]"किञ्च" इति । यद्यपि च स्वरूपं सदिति पारमार्थिक(२)मभिमतम्, अयमेव च त्वत्पक्षाद्विशेषः, त्वया दण्डादीनामपारमार्थिकत्वाङ्गीकारात्, तथापि पारमार्थिकत्वखण्डने हृदयम् ॥ श्लोकद्वितीयार्द्धं व्याचष्टे—। [b]"अथे"ति । सत्ताया इवाऽसत्ताया अपि कारणकोट्यप्रवेशादसत्कारणवादित्वाद्वयमपि नोपालभ्याः, यतो दण्डादिः कारणमित्यावयोः समानोऽभ्युपगमः, सच सच्चसन्वेति क्रमेण विचारणीयमित्यर्थः ॥ ननु सत्ताघटितं कारणत्वं न ब्रूमः, किन्तर्हि ? सत्तैव कारणत्वमिति, तथाच कारणत्वमभ्युपगच्छता त्वया सत्ताप्यङ्गीकर्त्तव्येति शङ्कते—। [c]"अथ ने" ति ॥ ममापि नियतपूर्वसत्त्वमेव कारणत्वमिति परिहरति—। [d]"तर्हीं" ति ॥ ननु कारणत्वं कारणानां धर्मः, स चेत्सत्ता, तदा सन्त एव दण्डादयः कारणानि, नाऽसन्तः, इति पर्यवसितं विवादेनेत्यत(३) आह—। [e]"तर्हीं"ति ॥

---

(१) शौल्किकभयाच्चिशायां मार्गान्तरेण गच्छतः दपितनिश्वस्य घट्टकुट्यां=शुल्कशालायां, यथा प्रभातं कस्यचिद्वञ्चकस्य तथा तत्र सत्त्वापत्तिभयाद्वाधान्तरेण वञ्चयतोपि सद्वाद आपन्न इत्यर्थः । विद्या० ।

(२) पारमार्थिकमित्यत्र 'स्वरूपम्'—इति शेषः ।

(३) इति पूर्वपक्षिणः शङ्कामनूद्य 'भावानवबोधात्' इत्यन्तं सिद्धान्त्याहेत्यर्थः वस्तुतस्तु अत्र 'इत्याह'—इत्येव पाठ उचितः, पूर्वपक्षस्यैव प्रथममुपस्थितत्वात्, अतो न क्लिष्टकल्पनं दोषः, पाठान्तरं तु लेखकप्रमादात् ।

मू० [a] सत्तामसतीमभ्युपगच्छतापि सत्ता मयाऽभ्युपगतै अन्यथा कासावसतीति(१)। [b] त्वमपि किं सत्तां तत्त्वामन्तर्भाव्य कारणत्वमिच्छसि? नत्वेवं(२), पूर्वं त्कापिसत्तात्यागो वा अनवस्थायां वा पर्यवस स्यात्। [c] * असत्त्वाविशेषात् कारणनियमः स्यात्* ?–इति चेन्न, [d] सत्त्वाविशेषेपि तुल्यत्वात् [e] * सत्त्वेऽस्त्यन्वयव्यतिरेकानुविधानं, तस्य, तज्ज्ञा यस्य वा, त्वत्पक्षे त्वसत्त्वाऽविशेषाद्व्यतिरेकः, सोप्यनियतः, यदा कारणाऽभावस्तदा कार्याभावावश्यम्भावानभ्युपगमात्, नित्याऽसतः कार स्याऽसत्त्वे एव कदाचित्कार्यो(३)त्पादात्, अ यस्तु न क्वचिदपि* ?–इति चेत् [f] न, तुल्यत्वात्।

टी० भावमाविष्करोति–। [a] "'सत्तामि"ति। न वयमसतीमपि नाभ्युपेमः, किन्तर्हि? सती(४)म्, अन्यथा किमुद्दिश्याऽसत्त्वमपि मया यमित्यर्थः॥ त्वयापि या सत्ता कारणत्वेनाभ्युपेयते सा स्वान्तर्भा कारणत्वं वाच्यम्, स्वविशिष्टा च सा त्वन्मतेऽप्यसत्त्येव, यदि च(५) त्मानं तटस्थीकृत्य सा सत्ता कारणत्वं तदा तया सत्तया तटस्थया

( १ ) केषुचित्पुस्तकेषु 'इति'–शब्दो न दृश्यते।

( २ ) विद्यासागरोक्तव्याख्यानाऽनुरोधेन नत्वेवमित्येतत्स्थाने 'नन्वेवम्' पाठः, यतस्ते व्याचख्युः "अङ्गीकरोति सद्वादी नन्विति"–इति। प्रकृतशाङ्करव्या नुरोधेन तु नत्वेवमित्यतोऽग्रेऽग्रिमग्रन्थयोजनासौकर्य्यार्थं 'तथा सति'–इति शेषः पू

( ३ ) यद्यपि कार्य्योत्पादकालेपि कार्य्यस्य परमार्थतोऽसत्त्वमेवेति व्यति बाधितस्तथाप्यभिप्रायमविदुषः शङ्का ज्ञातव्या।

( ४ ) 'किं तर्हि? सतीम्"–इत्यत्रापि 'नाभ्युपेमः'–इति सम्बन्धनीयम्

( ५ ) तटस्थीभूतसत्ताया अपि सद्व्यवहारप्रयोजकत्वमङ्गीकृत्याह–यदि "सत्तैव तु नसती"ति, कारणत्वात्मिका सत्तैव तु न तटस्थीभूतसत्तान्तरवती कारणता सतो निर्वहेदित्यत्र केचित् 'कारणता असतो निर्वहेदि'ति पदं छिन्द तत्र "नवा स्वस्य तटस्थीकरणे कारणत्वं सत्त्वं निर्वहेत्"–इत्यव्यवहितोत्त पौनरुक्त्यापातादिति।

णता सती निर्वहेत्, सत्तैव तु न सती, तस्याः सत्तान्तराभावात्, भावे वा पुनरपर्य्यवसानं स्यात्, नवा स्वस्य तटस्थीकरणे कारणत्वं सत्त्वमिति निर्वहेदित्याह—। [b] "त्वमपी"ति ॥ ननु यद्यसत्कारणं तदेदं कारणमिदमकारणमिति किंकृतो नियमः? इत्याह—। [c] "असत्त्वे"ति ॥ त्वन्मतेऽपि कारणाऽकारणविभागोऽनुपपन्नः, सत्त्वाऽविशेषादित्याह—। [d] "सत्त्वे"ति ॥ ननु सतः कारणत्वे दण्डजातीये सति घटः, व्यतिरेके च तस्य घटजातीयस्य व्यतिरेकः,—इत्यन्वयव्यतिरेकौ कारणताग्राहकौ सम्भवतः, नासतः कारणत्वे ताविति शङ्कते—। [e] "सत्त्वे" इति ॥ यथा सतोऽन्वयव्यतिरेकौ तथैवासतोऽपि, परन्तु निरूप्यमाणौ तौ(१) अप्यसन्तौ पर्य्यवस्यतः,—इत्यन्यदेतदित्याह—। [f] "न तुल्यत्वादि"ति ॥

मू० [a] अन्वयो नास्तीत्यभ्युपगच्छताप्यन्वयोपगमात् । [b] अन्वयस्यापि(२)सत्तान्तर्भावने कथितदोषापत्तेः । [c] एतेन "आशामोदकतृप्ता ये, ये चोपार्जितमोदकाः । रसवीर्य्यविपाकादि, तुल्यं तेषां प्रसज्यते"—इत्यस्यापि बाधकत्वमाशामोदकाद्यते, [d] सत्तान्तर्भावाऽनन्तर्भावाभ्यां प्रत्यादेशात्, [e] आशामोदकादिनापि च रसवीर्य्यविपाकादिजननात् । * तदसत्कथं कार्य्यं स्यात् *?—इति चेन्न, [f] सत्तामन्तर्भाव्य कार्य्यत्वोपगमे कारणवत्कार्य्येऽपि उक्तदोषस्य, अनन्तर्भावे वाऽविशेषस्य, पूर्ववदावृत्तेः ।

टी० किञ्च। 'असतोऽन्वयो नास्ति'—इति वदता त्वयाऽन्वयो निषेध्यत्वेनाप्यभ्युपगम्यत एवेत्याह—। [a] "अन्वय"इति ॥ ननु तथापि सदन्वयो नास्ति, स च प्रयोजकः? इत्यत आह—। [b] "अन्वयस्यापी"ति। अन्तर्भावितसतश्चेदन्वयो न स सँस्ततः। नान्तर्भावितसतश्चेदन्वयो न स सँस्ततः"—इति दोषापत्तेरित्यर्थः॥ ननु यद्यसत्कारणं तदा भोजनेऽभोजने

(१) तावपि = सतोऽप्यन्वयव्यतिरेकावित्यर्थः ।
(२) अन्वयस्यापि कुतो सत्ताप्रवेशने इत्यर्थः ।

च रसवीर्य्यादितौल्यं स्यादित्यत आह—। [c]"एतेने"ति । आशा=प्रत्याश
मनोरथ इति यावत् । उपार्जनं=भक्षणम् । रसः=आद्यो धातुः।
वीर्य्यं=बलं, चरमधातुः । विपाकः=परिणामः लौहित्यमिति यावत्
'रसो(१) मधुरादि,' रित्यादि व्याख्यानमयुक्तं, तस्य भोजनाऽजन्यत्वात्। आ
दिपदादिन्द्रियपाटवादिग्रहणम् ॥ एतेनेत्यस्याऽतिदेश्यमाह । [d]"सतो
ति । सतः कारणत्वमभिप्रेत्य बाधोयं भवताभिधीयते, तच्च(२)न्तर्भावि
सत्त्वं चेदित्यादिना पूर्वमेव निरस्तमित्यर्थः॥ भोजनाऽभोजनयोस्तुल्यत
पादनमिष्टापत्त्या निरस्यति—। [e]"आशामोदके"ति । भोजनेऽप्यसन् र
दिरभोजनेपि तथेति तौल्यमेवेत्यर्थः ॥ [f]"सत्तामि"ति । अन्तर्भावि
सत्त्वं चेत्कार्य्यं स्यात्तदसत्ततः । नान्तर्भावितसत्त्वं चेत्कार्य्यं स्यात्तदस
तः"—इति दोषापत्तेरित्यर्थः । दृष्टं च गुञ्जापुञ्जस्थले असता हुताशने
ऽसतः शीतापनोदस्योत्पत्तिर्वानराणाम्, असत्येव च मत्तकाशिन्या(३)सम
गसुखमसदेव स्वप्ने सुप्तानामिति भावः । यद्वा, ननु प्रागसतः सत्त्वं आ
त्वम्, इति कार्य्यसत्तावश्यमङ्गीकार्य्येत्यत आह—। "सत्तामि"ति । य
नियतपूर्वसत्त्वं कारणत्वमित्यत्राऽसती सत्ताऽभ्युपगता, तथा कार्य्यस
मप्यसतीमङ्गीकृत्यैतन्मया समाधेयमित्यर्थः ॥

मू० [a] तस्मात्

पूर्वसम्बन्धनियमे हेतुत्वे तुल्यएव नौ (४) ।
हेतुतत्त्वबहिर्भूतसत्त्वाऽसत्त्वकथा वृथा ॥ ५ ॥

* [b] आस्तां प्रतिबन्दिग्रहाऽऽग्रहः (५), कथं पुनरस

(१) विद्यासागराद्युक्तं व्याख्यानमाक्षिपति-रसोमधुरादिरिति ।

(२) तच्च = सतः कारणत्वं च ।

(३) मत्तकाशिनी = उत्तमस्त्री, "वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी"-
कोशात् ।

(४) नौ = आवयोः सदसद्वादिनोः, हेतुत्वे कार्य्याऽव्यवहितपूर्वक्षणसम्बन्ध
तुल्ये सति 'सतः कारणत्वं, नाऽसतः'-इति हेतुत्वाऽनुपयोगिना सत्त्वाऽसत्त्व
वृथेत्यर्थः ।

(५) प्रतिबन्दिग्रहे = प्रतिबन्दिग्रहणे, भवतां य आग्रहः स आस्तामित
क्वचित्तु 'प्रतिबन्दिग्रहग्रहः' इति पाठस्तत्राप्ययमेवार्थः ।

कारणत्वमवसेयम् प्राक्सत्त्वनियमस्य विशेषस्यानभ्युपगमात्, असत्त्वस्य चाऽविशेषात् *?–इति चेन्न "इदमस्मान्नियतप्राक्सदि"ति बुद्ध्या विशेषात्।[c] * भ्रान्तै[१]वंबुद्धिगोचरेऽतिप्रसङ्गः * ?–इति चेन्न,

टी० न सत्कारणं, नाप्यसत्कारणं, किन्तु नियतपूर्ववर्त्ति कारणं, तच्च यथा सत्, तथा असदपि, इति सदेव कारणमिति त्वत्कथावत् असदेव कारणमिति मत्कथाप्याऽऽपातता वृथा, विचारस्तु करिष्यते इत्युपसंहरति–[a]"तस्मादि"ति ॥ ननु, असत्त्वाविशेषात्कारणनियमः कथं स्यात्?,–इति मदुक्ते 'सत्त्वाविशेषेपि तुल्यत्वात्'–इति तु त्वया प्रतिबन्दिः कृता, प्रतिबन्दिश्च न दूषणम्, इत्यसतः कारणत्वं प्रमापकाभावादनुपपन्नमेवेति शङ्कते–।[b] "आस्तामि"ति। यद्वा "पूर्वसम्बन्धनियमे हेतुत्वे तुल्यएव नौ"–इति साम्यमात्रं त्वयोक्तम्, तच्चानुपपन्नं, सत्त्वासत्त्वपक्षे ग्राहक[२]सत्त्वाऽसत्त्वाभ्यां विशेषादिति शङ्कते–। "आस्तामि"ति। प्राचि काले सत्त्वं कारणत्वं ग्राह्यं, तदस्मन्मतेऽस्ति, त्वन्मते तु सर्वदैवासत्त्वम्, इति प्राचि काले सत्त्वं ग्राह्यं नास्त्येव किं गृह्येतेत्यर्थः ॥ ग्राह्यानुपपत्त्या ग्राहकाऽनुपपत्तिर्न भवत्यसत्यपि दण्डादौ घटप्राक्सत्त्वबुद्धिसम्भवात्, शुक्तौ रजतत्वबुद्धिवत्, सा बुद्धिर्दण्डचक्रादावेव न तु रासभादावपि, येन तत्रापि घटकारणत्वं व्यवह्रियेतेति परिहरति–।[c] "ने"ति ॥ रासभादावपि कदाचिदेवंबुद्धिसम्भवाच्च हि भ्रान्तिहेतवोपि केनचिन्नियम्यन्ते इति तस्यापि घटकारणत्वतद्व्यवहारयोः प्रसङ्ग इत्याह–।[d] "भ्रान्तैवमि"ति ॥

मू० "यादृश्या हि धिया त्रिचतुरकक्षाबाधाऽनवबोधविश्रान्तया वस्तुसत्त्वनिश्चयस्ते, तादृश्यैव विषयीकृतस्य

(१) भ्रान्तस्य 'रासभः' घटनियतपूर्ववृत्तिः'–इत्येवंभूतबुद्धिगोचरे रासभादौ कारणत्वप्रसङ्ग इत्यर्थः।

(२) ग्राहकौ=कारणताग्राहकावन्वयव्यतिरेकौ, तत्सत्त्वाऽसत्त्वाभ्यामित्यर्थः, सत्त्वपक्षे ग्राहकयोरन्वयव्यतिरेकयोः सत्त्वं, नाऽसत्त्वपक्षे इति विभागः।

**ममापि कारणतानिश्चयः (१), [b] केवलं ततः परासवी कक्षासु बाधात्पूर्वभ्रान्तिसम्भवेन न तावता सत्त्वावधारणं वयं मन्यामहे—इति विशेषः, [c] परदर्शनसिद्धान्तस भूरिकक्षाबाधाविनापि ततः परकक्षाबाध्यमानत्वेनाऽतथाभावोपगमात् । [d] अन्यथैकदर्शनपरिशेषः स्यात् ।**

टी० कारणाकारणयोरेवंबुद्धिसम्भवेऽपि कारणे झटिति बाधानवतारोऽकारणे तु झटित्येव बाधावतारः, इत्यवतीर्णबाधाऽनवतीर्णबाधबुद्धिकृतो विशेष इत्याह—। [a] "यादृश्ये"ति ॥ ननु यद्यनवतीर्णबाधया धिया प्राक्सत्त्वं विषयीकृतं, तदा तत्पारमार्थिकमभ्युपगन्तव्यं त्वयैवेत्यत आह- [b] 'केवलमि"ति । आपाततोऽबाधविशेषमात्रमाचक्ष्महे, पर्यन्तत(२) स्तत्रापि बाधाऽवतार एवेति न वस्तुतत्त्वस्थितिरिति भावः । यद्यपि क्रमेणाबाधितया धियाऽबाधितया वा बाधः ? । आद्ये न (३) क्षतिः, अन्त्ये तः बाधो वस्तुतत्त्वाधीन एव त्वया वाच्य इति सिद्धं वस्तुतत्त्वम् । * न तत्रा(४)प्यबाधितबुद्धिविषयत्वमेव शरणं *, तत्राप्येतद्विकल्पाऽवतारात किञ्चाऽन्यथात्वबोधनं बाधः ? अन्यथात्वप्रमापणं वा ? । आद्ये बाध्यापि बुद्धिर्बाधिका स्यात्, अन्त्ये तत एव वस्तुव्यवस्थितिः, तथापि सर्वा विशेषो बुद्धिकृतो न वस्तुकृत इति भावः ॥ नन्वापाततश्चेदबाधस्त तावतातत्र क्रमिकबाधाऽभावोऽप्युन्नेष्यते(६)इत्यत आह—। [c] "परदर्शने"ति

(१) 'असति दण्डादौ' इति शेषः ।

(२) पर्यन्ततः=अन्ततोगत्वा, तत्त्वज्ञाने सतीति यावत् । तत्रापि=आपाततोऽबाधितबुद्धिविषयेऽपि । बाधावतार इत्यत्र क्रमेणेति शेषः ।

(३) न क्षतिः, बाधिकाया धियो बाधे प्रपञ्चेऽबाध्यत्वस्यैव विश्रामात् ।

(४) तत्रापि=अबाधितबुद्धावपि, द्वित्रिचतुरकक्षास्वबाधितबुद्धिगोचरत्वतः णामेवाऽबाधितत्वं, पर्य्यन्ततस्तत्रापि बाध एवेत्यर्थः ।

(५) बाध्यापि 'इदं रजतम्'--इत्याकारिका बुद्धिः शुक्तिज्ञानस्य बाधिका स्या अन्यथात्वबोधनस्य तत्र सत्त्वादित्यर्थः ।

(६) उन्नेष्यते=अनुमास्यते, तथाहि—उत्तरोत्तरबुद्धिविषया घटादयोऽबाध्या विषयत्वात्, द्वित्रिचतुरकक्षाऽबाधितबुद्धिविषयघटादिवदिति ।

इति कोशा(१)त्। "गाङ्कुटादिभ्यः" इत्यादिसूत्रस्थकुटपदं वा दृष्टान्तः। कुटादौ=कुटादिस्थले, यद्बहुव्रीहिवाक्यं तत्स्वाविषयेऽपि व्यवहारं प्रयोजयतीति योजना; न तु(२)सप्तम्योः सामानाधिकरण्यम्॥ ननु, स्वाविषयेऽस्मिन् ज्ञानं व्यवहारप्रवर्तकमित्यत्रापि तवाऽद्वैतवादिनो न दृष्टान्तोऽस्ति, दृष्टान्तस्य व्यवहारस्य च ब्रह्मगोचरस्याऽनभ्युपगमादित्यत आह–। "अविद्ये"ति॥

**मू० "तदेवं यद्यदन्यत्र(३)दृष्टवैधर्म्यं स्वप्रकाशे पर्य्यवसास्यति तत्सर्वमन्यथानुपपत्तिरेव स्वप्रकाशसाधकतया प्रदर्शिता स्वीकारयिष्यति। तद्यथा–अन्यो ज्ञाताऽन्यश्च ज्ञेय इत्यन्यत्र दृष्टमहमिति व्यवहारान्यथानुपपत्त्या त्याज्यं; तथाऽन्यज्ज्ञानमन्यज्ज्ञेयमिति जानामीति व्यवहारान्यथानुपपत्त्या त्याज्यं; सर्वतो बलवती ह्यन्यथानुपपत्तिस्तथादृष्टतामात्रबलमवलम्ब्य प्रवृत्तं तर्कशतमपि बाधते।**

टी० ननु, कुटादावपि तद्गुणसंविज्ञानबहुव्रीहेरनुशासनबलाल्लक्षणया, शक्त्या वा, कुटोऽपि विषय एव; तथाच व्यवहारानुरोधात्स्वप्रकाशेऽपि कर्मक्रियाभावो विषयविषयिभावो वाऽवश्यमङ्गीकर्त्तव्यः, स चाऽभेदे सर्वत्रानुपपन्न इति कथं स्वप्रकाशत्वम्?। न च दृष्टान्तमात्रादिष्टसिद्धिः, इति तयोः किंचिदावश्यकमत आह–। "'तदेवमि"ति। ज्ञानस्य ज्ञानान्तरप्रकाश्यत्वेऽनवस्था, शेषासिद्धा सर्वासिद्धिरनिर्मोक्षापत्तिश्चेत्यन्यथानुपपत्त्या स्वप्रकाशताऽवश्यमङ्गीकर्त्तव्या, सा च यावता विना न सिद्ध्यति तावदवश्यमङ्गीकर्त्तव्यम्; अतो विषयविषयिभावं क्रियाकर्मभावं वा कथमद्वैतेऽप्यर्था-

(१) का. २। वैश्य व.। श्लो. ३२।

(२) अस्मिन्द्वितीयवर्णके "स्वाऽविषये" "कुटादावि"ति सप्तम्योः पूर्ववर्णके दर्शितसामानाधिकरण्यवत्सामानाधिकरण्यं नेत्याह–नत्विति।

(३) अन्यत्र = लोके कर्मक्रियाभावो विषयविषयिभावो वा भेदे दृष्टस्ततो वैधर्म्यं ज्ञानस्य स्वप्रकाशत्वेऽभेदे कर्मक्रियाभावादिः।

पत्तिर्न साधयिष्यतीत्यर्थः ॥ ननु, यदन्यत्रादृष्टं तदप्यन्यथानुपपत्तिः
यतीत्यप्यदृष्टमेवेत्यत आह—। [b]"तद्वये"ति। ज्ञातुर्ज्ञेयत्वं, ज्ञानस्य
त्वमन्यत्रादृष्टचरमप्यहमिति व्यवहारान्यथानुपपत्त्या, जानामीति
रान्यथानुपपत्त्या च, त्वयाभ्युपेयते, तथा प्रकृतेपीत्यर्थः ॥ नन्वन्यथा
कथमयं महिमा? कथं वाऽन्यथानुपपत्तिरेव दृष्टेन न बाध्यते? इत्यत
[c]"सर्वत"इति। यदि तज्ज्ञानं क्रिया स्यात्तदा कर्म न स्यात्, यदि
स्यात्तदा विषयि न स्यात्, यदि स्वं न विषयीकुर्यात्तदा स्वस्मि
हारं न प्रवर्तयेत्—इत्यादितर्कशतमप्यन्यथानुपपत्तिबाध्यमेव, न तु
कमित्यर्थः ॥

मू० [a]तदिदमाहुः,—"प्रमाणवन्त्यदृष्टानि कल्प्यानि
हून्यपि"(१)इति। [b]तस्मात्—

अन्यथानुपपत्तिश्चेदस्ति वस्तुप्रसाधिका।
पिनष्टि दृष्टवैमत्यं(२)सैव सर्वबलाधिका ॥ ६ ॥
[c]वाच्यान्यथोपपत्तिर्वा त्याज्यो वा दृष्टताऽग्र
नह्येकत्र समावेशश्छायाऽऽतपवदेतयोः ॥ ७ ॥

[c]तदित्थं त्वदङ्गीकृतसद्विचारलक्षणोपपन्नैरेवंवि
चारैः स्वप्रकाशता भवता सुप्रतिपदा; [d]अस्मा
संवेदनबलादेव स्वतःसिद्धरूपं विज्ञानमास्थीयते

टी० ननु, तवैवं प्रौढिमात्रं न तु प्रामाणिकानामिदम
आह—। [a]"तदिदमि"ति। यत्रादृष्टे प्रमाणं प्रवर्तते तददृष्टमपि
ज्ञानम्; अशरीरी कर्त्ता; सुखदुःखात्यन्ताभाववानात्मा; निःस्पर्शं
मनः; जातमप्यविनाशि, यथाध्वंसः; अनुत्पन्नमपि विनाशि, यथा प्रा
स्वयमेव स्ववृत्ति, यथा प्रमेयत्वं) प्रामाणिकैरभ्युपगम्यते इत्यर्थः।

(१) "अदृष्टशतभागोऽपि न कल्प्यो निष्प्रमाणकः"—इत्युत्तरार्द्धम्।
(२) दृष्टवैमत्यं = प्रत्यक्षविरोधं, पिनष्टि = परिहरतीत्यर्थः।

पत्तेरन्यथोपपत्तिमात्रं बाधकं, प्रकृते तु सा नास्त्येवोक्तयुक्तेरित्यर्थः ॥ उक्त मर्थं श्लोकद्वयेन संगृह्णाति—। [b]"तस्मादि"ति ॥ नन्वर्थापत्त्या स्वप्रकाशतासिद्धावपि द्वैतं तदवस्थमेव, स्वप्रकाशज्ञानभिन्नाया अर्थापत्तेर्विचारस्य चैतादृशस्य त्वयाप्यभ्युपगमादित्यत आह—। [c] "तदित्थमि"ति। नेयमर्थापत्तिर्न चायं विचारो मयाभ्युपेयते किंतु त्वदभ्युपगमेन त्वं बोध्यसे इति न द्वैतापत्तिरित्यर्थः ॥ तर्हि स्वप्रकाशज्ञानसिद्धिरपि कथं तवेत्यत आह—। [d]"अस्माभिरि"ति। यद्यपि तदेव ज्ञानं(१)प्रकाशकं, प्रकाश्यम्, अभ्युपगन्तव्यम्, अभ्युपगमः, अभ्युपगन्तृ(२), स्वप्रकाशत्वेन परबोधनं, बोध्यश्च परः, बोधकं वचनं चेति संकलयतो महासाहसिकत्वमसंकलयतश्च द्वैतापत्तिस्तथापि प्रपञ्चबाधाया वक्तव्यतया तथैव पर्य्यवसास्यतीति हृदयम्। यद्यपि यत्स्वप्रकाशं ज्ञानं त्वयाभ्युपगतं तस्य सर्वोऽयं प्रपञ्चः, स्वं च विषय इत्यस्तु, तथाच तद्विषयतया न प्रपञ्चमिथ्यात्वं, नाप्यद्वैतं, प्रपञ्चस्यैव सत्त्वात्; नापि तादृशे(३)तत्र प्रमाणान्तरापेक्ष, स्वतः सिद्धत्वात्; नाप्यस्माकमपसिद्धान्तः, ईश्वरज्ञानस्य तादृशस्यास्माभिरभ्युपगमात्; नापि ज्ञानस्य ज्ञानान्तरवेद्यतापक्षोक्तदोषः, तेनैव सर्वविषयकेण सर्वदोषनिरासात्; तथाच स्वबधाय कृत्योत्थापनमेतत्—स्वप्रकाशज्ञानसाधनम्। *तस्य प्रपञ्चो विषय इत्यत्र किं प्रमाणम्*?—इति चेन्न, प्रपञ्चविषयतायामपि तस्यैव ज्ञानस्य प्रमाणत्वात्; त्वन्मते स्वप्रकाशतायामिव। अस्माकं तु तद्भिन्नमपि धर्मिग्राहकं(४)प्रमाणमस्ति, न च तज्ज्ञानविषयीकृतं(५)प्रपञ्चं खण्डनयुक्तयोऽप्यपनेतुमीशते, सुदृढप्रमाणसिद्धत्वात्। तस्मात्,—"त्वया निर्म्माय दत्तेऽस्मिन् स्वप्रकाशैकमन्दिरे। न्यासीकृतः प्रपञ्चोयं नापह्नोतुं तवार्हति। प्रकाशपाशबद्धानां प्रपञ्चानां विमोचने। प्रभवन्तु स्वयं बाध्याः

---

(१) तदेव ज्ञानं प्रकाशकप्रकाश्याद्यष्टविधरूपेण व्यवस्थितं विचारयतो महासाहसिकत्वमित्यन्वयः।

(२) 'अभ्युपगन्ता चे'त्यपि क्वचित्पाठः। (३) तादृशे = स्वप्रकाशज्ञाने।

(४ ईश्वरप्रवृत्तिर्ज्ञानप्रयोज्या प्रवृत्तित्वादस्मदादिप्रवृत्तिवदित्याकारकमीश्वरज्ञानलक्षणधर्मिसाधकमनुमानमेवेश्वरज्ञाने प्रपञ्चविषयकत्वमपि प्रसाधयिष्यतीत्यर्थः-

(५) ईश्वरज्ञानविषयीकृतमित्यर्थः।

कथं खण्डनयुक्तयः" तथापि प्रपञ्चखण्डनयुक्तयस्त्वया बाधितु
इति हृदयम् ॥

मू० "एवं च सति सौगतब्रह्मवादिनोरयं विशेषो
दिमः सर्वमेवानिर्वचनीयं वर्णयति (तदुक्तं भग
लङ्कावतारे (१)–b"बुद्ध्या विविच्यमानानां स्व
नावधार्यते । अतो निरभिलप्यास्ते निःस्वभा
देशिताः(२)" इति) 'विज्ञानव्यतिरिक्तं पुनरिदं
सदसद्भ्यां विलक्षणं ब्रह्मवादिनः संगिरन्ते। तथा
नेदं सद्भवितुमर्हति, वक्ष्यमाणदूषण(३)ग्रस्तत्वा
नाप्यसदेव, तथा सति लौकिकविचारकाणां(४)
व्यवहारव्याहत्यापत्तेः। यदपि 'निर्वक्तुमसामर्थ्य
व उपास्यन्तां येभ्यो निरुक्तयः शिक्ष्यन्ते'–इत्यु
म्भवचनं तत्तदा शोभेत यदि मेयस्वभावाऽनुग
नीयमनिर्वचनीयतेति न ब्रूयुः, वक्तृदोषादिति
वदेयुः। d"यस्तु वादी निरुक्त्यभिमानं धत्ते स निर्व
नतु शक्ष्यति, वक्तव्यदोषात्(५) ।

टी० ननु, यदि विचारोपि त्वया नाभ्युपेयते तदा माध्यमि
तप्रवेशात्तवापि दर्शनमदर्शनमेवेत्यत आह–। a"एवं चे"ति । आदि
सौगतः, भगवता=बौद्धेन (६), समन्तभद्रो भगवान्मारजिल्लोकजि

(१) विद्यासागरास्तु "अलङ्कारावतारे"–इति पाठं व्याचष्टे ।
(२) देशिताः=उपदिष्टाः सन्तः ।
(३) लक्षणाधीना हि लक्ष्यव्यवस्थितिर्लक्षणानि चाऽनुपपन्नानीत्यादिदू
(४) लौकिकविचारकाणां, लौकिकानां परीक्षकाणां चेत्यर्थः ।
(५) भेदप्रपञ्चस्य स्वतः परतो वा सिद्ध्यसम्भवरूपाद्वक्तव्यदोषात्,
मेन प्रतिपक्षोपाधेर्बाधरूपाद्वा ।
(६) अत्र 'बुद्धेन'–इति पाठस्समुचितः । 'बौद्धेन'–इति पाठे तु बुद्ध
बौद्ध इति कथञ्चिद्व्याकरणीयम् ।

न"—इति कोशात्; लङ्कावतारस्तदागमग्रन्थः ॥ [b]"बुद्ध्ये"ति। यथा बुद्ध्य-
तिरिक्तः पदार्थो बुद्ध्या विविच्यमानो विचारं न सहते तथा बुद्धिरपि वि-
विच्यमाना विचाराऽसहत्वाच्चिरभिलप्या=अनिर्वचनीया, निःस्वभावा=अ-
सतीत्यर्थः (१) ॥ सौगतदर्शनात् स्वदर्शनं भिनत्ति—। [c]"विज्ञानव्यतिरिक्त-
मि"ति। 'भवितु(२)मर्हति'—इत्यधिकमपि लौकिकमनुरुद्ध्योक्तम्। मेयस्यायं
स्वभावो यदस्य निर्वचनमशक्यं न तु निर्वक्तुः(३); स च तदा स्याद्यदि
कोपि शक्नुयान्निर्वक्तुं, येपि गुरव उपासनीयास्तेपि निर्वक्तुमकुशला एवे-
त्यर्थः ॥ त्वमपि गुरुर्भूत्वा मां शिक्षय यदि पारयसीत्याह—। [d]"यदि त्व"ति॥

**मू०** *"नच ते दोषाः स्वकमपि घ्नन्तो जातयः कथं न स्युरिति वाच्यम्*, 'यतो निर्वचनीयत्वं बाध्यते तैर्दोषैः स्वयमप्यनिर्वचनीयैरेव, अनिर्वचनीयैरेव च तैर्व्यवह्रियते एवेति कुतोऽस्मान् प्रति व्याघातः स्यात् 'तज्जातित्वस्य च निरुच्य योजयितुमशक्यत्वात्। * [d]ननु"सदसत्पक्षयोर्दोषदर्शनादनिर्वचनीयता"—इति ब्रुवाणस्य किं सदसत्त्वसंशयः? किं वा सदसत्त्वपक्षबहिर्भावाभ्युपगमः? 'आद्ये भवितव्यं तावत्सदसत्त्वयोरन्यतरेणेत्येकपक्षदोषस्याभासत्वं, [f]तच्च सत्त्व; पक्षदोषस्यैवाऽभ्युपेयमावश्यकत्वात्।

**टी०** ननु(४)"वक्ष्यमाणदूषणग्रस्तत्वात्"—इत्ययमपि हेतुर्वक्ष्यमाणदूषणग्रस्त एव, तथाच स्वव्याघातकतया जात्युत्तरमेतत्; यथा(५)'नेदं

---

(१) बुद्धेर्निःस्वभावत्वोपवर्णनं भावार्थो नत्वक्षरार्थः।

(२) ननु मूले"नेदं सद्भवितुमर्हति"—इत्यत्र"नेदं सत्"—इत्येव पर्याप्तं किं भवितुमर्हतीत्यधिकोक्त्या, अर्थाऽव्यतिरेकात्पुनरुक्तेश्चेति तत्राह—भवितुमिति ॥ "लौकिक"मि, लोके धार्यं धारितं, ग्राह्यं गृहीतम्, इत्यादौ यथा पुनरुक्तिर्न दोषस्तद्वदिहा-ति भावः।

(३) 'न तु निर्वक्तुः"—इत्यत्र 'स्वभावः'—इत्यनुषज्यते, निर्वक्ता चात्र सदोषपुरुष न "यदि कोपि शक्नुयात्"—इत्यग्रिमग्रन्थासङ्गतिः।

(४) न्यायाऽलङ्कारग्रन्थेऽनिर्वचनीयतादूषणं यदभाणि तदनुवदति—नन्विति।

(५) जात्युत्तरमेवोदाहरति—'यथा नेदम्' इत्यादिना। इदं = धूमलक्षणं साधनं,न

साधकं, सर्वथाऽनुपलभ्यमानोपाधिशङ्काग्रस्तत्वात्'–इत्यादि;
दोषाणामपि बाध्यत्वं, तदा प्रपञ्चः कथं बाध्यतां तैरित्याशङ्कते–।
ति ॥ बाध्यैरेव दोषैर्जगद्बाध्यमित्यङ्गीकृत्य प्रवृत्तं मां प्रति न
तद्दोषावकाश इत्याह–। [b]"यत"इति ॥ ननु, स्वव्याघातकं दोषं
नस्त्वं जातिवादी निरनुयोज्यानुयोगेन निग्रहस्थानेन निगृहीत इति
मस्माभिरित्यत आह–। [c]"तज्जातित्वस्ये"ति । वक्ष्यमाणदोषैर्जा
णामपि निर्वक्तुमशक्यमेवेति जातित्वमव्यवस्थाप्याहं निगृही
इत्यर्थः ॥ यथा, शब्दे नित्यत्वानित्यत्वयोर्द्वयोरपि दोषदर्शनाद्
टिकः संशयस्तथा प्रपञ्चे सत्त्वासत्त्वयोर्दोषदर्शनात्संशयो वा? के
राभ्युपगमो वा?–इति विकल्प्य सत्त्वपक्षध्रौव्यं (१) शङ्कते–। [d]"ननि
[e]"आद्ये"इति । परस्परविरहस्वभावकोटिकसंशयधर्मिणा एकको
कत्वावश्यकत्वात् तस्यां वास्तव्यां कोटौ दोषा नूनमाभासा इ
[f]"तत्त्वे"ति । आभासत्वमित्यर्थः ॥

मू० [a]"यदि तावत्सत्त्वपक्षस्तदा सत्त्वपक्ष दोषः [b]कथं संस्थि
[c]अथाऽसत्त्वपक्षस्तदा सर्वासत्त्वे तद्दोषः कथं सद्भा
भवितुं प्रभवेत् । [d]द्वितीयस्तु व्याघातादेवाऽस
"परस्पर(२)विरोधे हि न प्रकारान्तरस्थितिः" इ
तदेतदनाकलितपराभिसन्धेः प्रत्यवस्थानम् । [e]यो
मनिर्वचनीयसदसत्त्वं(३) ब्रूते स कथमनिर्वचनीयता
व्यवस्थितौ पर्यनुयुज्येत, सापि हि कृत्स्नप्रपञ्चपा

---

वन्हिलक्षणसाध्यसाधकं, सर्वथाऽनुपलभ्यमानोपाधिशङ्काग्रस्तत्वादित्युक्ते भवति
स्यापि "सर्वथाऽनुपलभ्यमानोपाधिशङ्काग्रस्तत्वात्"–इत्यस्य हेतोर्व्याघातः, तल्ल
लक्षणसाधनवत्सर्वथाऽनुपलभ्यमानोपाधिशङ्काग्रस्तत्वात्; अत एव च व्या
घातकमसदुत्तरं जातिरि"ति वचनात् ।

(१) 'सत्पक्षध्रौव्यम्'–इत्यपि क्वचित्पाठः ।

(२) कुसमाञ्जलावुदयनोक्तं व्याघातमेवोपपादयति–परस्परेति । "
विरुद्धानामुक्तिमात्रविरोधतः"–इत्युत्तरार्द्धम् ।

(३) अनिर्वचनीये=निर्वचनानर्हे, सत्त्वासत्त्वे यस्य तदनिर्वचनीयस

न्दाभिधेयमध्यनिविष्टैव। [f]परस्यैव व्यवस्थयैवं पर्य्यव-स्यति—निर्वचनप्रतिक्षेपादनिर्वचनीयत्वं, विधिनिषेध-योरेकतरनिरासस्येतरपर्य्यवसायिताया [g]स्तेनाभ्युपग-मात्। [h]ततः परकीयरीत्येदमुच्यते,—'अनिर्वचनीयत्वं विश्वस्य पर्य्यवस्यति' इति। [i]वस्तुतस्तु, वयं सर्वप्रपञ्च-सत्त्वाऽसत्त्वव्यवस्थापनविनिवृत्ताः स्वतः सिद्धे चिदा-त्मनि ब्रह्मतत्त्वे केवले भरमपलभ्य चरितार्थाः सुख-मास्महे।

टी० आवश्यकत्वमेवाह—। [a] "यदि तावदि"ति॥ [b] "कथमि"ति ारमार्थिकत्वदुष्टत्वयोरेकत्रासंभवादित्यर्थः॥ असत्त्वपक्षेऽपि सत्त्वपक्षदो स्याभासत्वमुपपादयति—। [c]"अथे"ति। तद्दोषः—सत्त्वपक्षदोषः॥ [d]"द्वि ीय" इति। सदसत्त्वपक्षबहिर्भाव इत्यर्थः॥ मदभिमतायामनिर्वचनी तायां विकल्प्य दोषाभिधान प्रकारान्तरेण (१)निर्वचीयतायाः सत्त्वव्य-स्थित्यै त्वया कृतं, सोऽयं दोषाभिधानलक्षणः पर्य्यनुयोगो न मयि टते, यतोऽनिर्वचनीयताख्यस्यापि धर्मस्याऽनिर्वचनीयतैव मदभिमते-याह—। [e]"यो ही"ति॥ ननु, यद्यनिर्वचनीयता न त्वया व्यवस्थापनीया दा कथं व्यवतिष्ठेतेत्यत आह—। [f]"परस्ये"ति॥ [g]"तेने"ति। परेणे-पर्थः॥ [h]"तत" इति। अनिर्वचनीयत्वं मया न साध्यते किंतु 'निर्वच-खण्डनेन पारिशेष्यादनिर्वचनीयत्वं सिद्ध्यति'—इति ब्रूमः॥ नन्वनिर्वच-ीयत्वं मा साध्यतां, परिशेषसिद्धानिर्वचनीयताभ्युपगमेनापि द्वैतापत्ति-तदवस्थेत्यत आह—। [i]"वस्तुतस्त्व"ति। परिशेषसिद्धेऽप्यनिर्वचनीयत्वे म नाभ्युपगमः, अपि तु त्वं तया बोध्यसे इत्यर्थः। भरम्—अध्यवसायम्॥

मू० "ये तु स्वपरिकल्पितसाधनदूषणव्यवस्थया विचारमव-तार्य तत्त्वं निर्णेतुमिच्छन्ति तान् प्रति ब्रूमः—न सा-

(१) प्रकारान्तरेण = सत्त्वप्रकारेणैव, निर्वाच्यत्वस्य सत्त्वव्यवस्थित्यर्थमित्यर्थः क्वचित्तु "अनीर्वचनीयताया,: सत्त्वव्यवस्थित्यै"—इति पाठस्तत्र प्रकारान्तरेण = अनिर्व-नीयत्वप्रकारेणैवानिर्वचनीयतायाः सत्त्वव्यवस्थित्यर्थमित्यर्थः।

ष्वीयं भवतां विचारव्यवस्था, भवत्कल्पितव्यव
व्याहतत्वात्। [b]अत एवाऽस्मदुपन्यस्यमानदूषण
विषयाः पर्य्यनुयोगा निरवकाशाः, [c]त्वद्व्यवस्थ
द्व्यवस्थाया व्याहत्युपन्यासात्। *[d]नचोपन्या
निर्बन्धकारणम्*, विचारोपन्यासस्य(१)सदस
गमाद्युदासीनैर्विचार्य्यमित्युपेत्यैव परं विचा
नायाः शक्यत्वामित्यावेदितत्वात्। [e]यदि तु "
रस्य सत्त्वमनभ्युपेत्या न विचारयितुं शक्यम्"
च्यते, तदा प्रमाणमव्यापार्य्य(२)न तदीयसत्त्वा
मोपि शक्यतेऽतिप्रसङ्गात्;इति विचारस्यापि
ग्रहणेऽनवस्थया विचारारम्भ एवाऽशक्यः
*[f]नच पूर्वपूर्वसिद्धस्वाद्विचारे विचारान्तरमिद
गवेषणीयम्(३) *। [g]विचारस्य पूर्वसिद्धत्वे वि
रूपस्वविषयव्यवस्थितत्वात् तस्य, विचार्य्यमपि
मेव विचारितमित्यनारम्भ एव विचारस्य।

टी० ननु, तर्हि सदसत्त्वविचारेपि किमर्थं ते प्रवृत्तिरित्यत
[a]"येत्वि"ति। ब्रह्मभिन्नतत्त्वद्वेषमात्रेण विचारेत्वदभ्युपगतविचार
प्रवर्तामहे इत्यर्थः ॥ [b]"अत एवे"ति। यतः परपरिकल्पितसाध
व्यवस्थयैव प्रवर्तामहे नतु स्वयं साधनदूषणादिव्यवस्थामभ्युपगच्छा

---

(१) विचारोपन्यासनिष्ठे ये सत्त्वाऽसत्त्वे तदुपगमाद्युदासीनैरित्यर्थः,
न्वयश्च "शरैः शातितपत्त्राणि" इति वच दोषावहः। "विरोधोपन्यास
क्वाचित्कः पाठस्तु प्रामादिकः।

(२) प्रमाणमव्यापार्य्याऽप्रवर्त्याऽनुपन्यस्येति यावत्। तदीयसत्त्वाभ्यु
विचारसत्त्वाभ्युपगमोऽपि न, शशशृङ्गादेरपि सत्त्वाभ्युपगमप्रसङ्गात्; तथाच प्रमाण
विचारसत्त्वाङ्गीकारे प्रमाणव्यापारोऽपि कथात्मकविचारान्तरे, तस्यापि च
पगमो विचारान्तरे, वक्तव्य इत्यनवस्थानात्प्रथममेव मतिकर्दमे विचारारम्भ
क्यमापद्येतेत्यर्थः।

(३) "इदानीं न गवेषणीयम्"–इत्यपि पुस्तकान्तरे दृश्यमानः पाठः

दाश्रिता अद्वैतव्याघातादयो दोषाः स्युरित्यर्थः ॥ "अत" इत्यस्यातिदे-यमाह—। [c] "त्वद्व्यवस्थये"ति ॥ ननु, विचारे व्याघातोपन्यासस्त्वया कर्त्तव्य इति विचारस्य, व्याघातोपन्यासस्य च, सत्त्वमभ्युपगतमिति द्वैता-पत्तिरेवेत्यत आह—। [d] "नचे"ति । 'प्रमाणादेरिव विचारव्याघातोपन्या-सयोरपि सत्त्वमनभ्युपगम्यैव विचारे प्रवृत्तिः शक्या'—इत्युक्तत्वादित्यर्थः ॥ 'प्रथमं मतिकर्दमेन विचारप्रवृत्तिरेव न स्यात्'—इत्युक्तं स्मारयति—। [e] "यदि-त्व"ति ॥ ननु, विचारस्यापि विचार्य ग्रहणे विचाराप्रवृत्तिः स्यात्, नत्वेवं, किं तर्हि पूर्वमेव विचारः सिद्धः? (१)इत्यत आह—। [f] "नचे"ति ॥ विचा-रसिद्धिर्विचार्यसिद्धिनान्तरीयकी, ज्ञानस्येव विचारस्यापि सविषयकत्वात्; तथाच किं विचारेण, विचार्य्यसिद्धेस्तत्फलस्य संपन्नत्वादित्याह—। [g] "विचा-रस्ये"ति ॥

मू० [a] "अथ *विचार्यविशेषस्य पूर्वमसिद्धत्वात् तदर्थं वि-चारारम्भः? *, [b] तर्हि विचारविशेषस्यापि तद्विषय-कस्य पूर्वमसिद्धिरेवेति वृथा शुष्क(२)चर्वणम् । [c] यदि च त्वद्दर्शनरीत्याभिधीयमानमस्माभिर्बाधं बाधसे तदा स्वाभ्युपगतरीतिबाधाभिधायितैव ते स्यात् । [d] अस्माभिर्निर्वाह्यमानस्य त्वया खण्डनयुक्त्यैव बाधे-ऽस्माकमेव जेतृता, "[e] खण्डनयुक्तयो बाधिकाः, नि-र्वाह्यपक्षश्च बाध्यः"—इत्यस्याऽस्मदुक्तपक्षस्य त्वयैव निर्वाहात् ।

टी० ननु, विचारलक्षणस्य विचार्य्यस्य पूर्वसिद्धत्वेपि प्रपञ्चसत्त्वा-त्त्वलक्षणस्य विचार्यविशेषस्य न पूर्वसिद्धत्वमिति तदर्थमयं विचारः स्यादेवेत्याह—। [a] "अथे"ति ॥ तर्हि स विचार्य्यविशेषो यस्य विचारस्य

(१) पूर्वमेव विचारः सिद्धः। अनादिसिद्ध इत्यर्थः तथा च बीजाङ्कुरवेदनादि-वाचानवस्थेति भावः ।

(२) शुनः शुष्कास्थिचर्वणं यथा वृथा तथेदमित्यर्थः ।

विषयः सोऽप्यसिद्ध एव, तत्सिद्धौ विचार्यविशेषस्यापि सिद्धत्वप्र
एवं 'ततः पूर्वपूर्वसिद्धत्वाद्विचारे विचारान्तरमिदानीमगवेषणी[1]
इति यदुक्तं तच्छुष्कचर्वणमित्याह–। [b]"तर्ही"ति ॥ ननु, प्रवर्त्यत
चारः, तत्र विचारे त्वदुक्ता दोषा मया युक्त्यन्तरेण बाधनीया इ
वसानं स्यादित्यत आह–। [c]"यदि चे"ति ॥ ननु, दोषा अपि हेत्वा
दयस्त्वया खण्डिता एव, तदेव खण्डनमादाय त्वयोद्भाव्यमाना
मयापि खण्डनीया, इत्यहमेव जेष्यामित्यत आह–। [d]"अस्माभि
यद्यपि तस्यां कथायां त्वदुपन्यस्तदोषाणां परेण खण्डनयुक्त्या
परस्य जेतृता, न तव, उपन्यस्तदोषस्य त्वयाऽनिर्वाहात्; तथापि
खण्डनयुक्तीनां बलवत्त्वं तावदङ्गीकृतमित्येतावतैव मम जेतृतेति (
यम् ॥ कथं जेतृतेत्यत आह–। [e]"खण्डने"ति ॥

मू० [a]तस्मात्त्वया निर्वाह्यमस्माभिस्तु खण्डनीयमि
इयामेव परं कथायां त्वन्निर्वाह्यनिर्वाहे तव
नान्यथेति । [b]तदेवं भेदप्रपञ्चोऽनिर्वचनीयः, ब्रह्म
परमार्थसदद्वितीयमिति स्थितम् (३) ।

—◦◦◦—

*[c]नन्वद्वैते किं प्रमाणम् ?* । [d]प्रश्न एव तावद
नङ्गीकुर्वतो नोपपद्यते । [e]प्रमाणं यत्राद्वैते (४)प्र
तस्याऽप्रतीतौ कथमेवंभूतः प्रश्नः संगच्छते ।

(१) 'न गवेषणीयमि'त्यपि क्वाचित्कः पाठः साधुरेव ।
(२) यथा निर्वाह्यार्थः खण्डनयुक्तिभिर्बाध्यस्तथा खण्डनयुक्तयोऽपि
बाध्या इत्येतावतैव मम जेतृतेति भावः ।
(३) { किमस्ति मानमद्वैते इतीष्टे प्रष्टुमेव न ।
मतत्वे वाऽमतत्वे वेत्येतत्प्रस्तूयतेऽधुना ॥ }
(४) "यत्राम द्वैते" इत्यपि पाठः ।

प्रमाणमात्रं भवता पृच्छ्यते, किंनाम विषयविशेषनियतम्, तच्च(१)तदोपपद्यते यदि तादृशं ते प्रतीतिमारोहेत्, प्रश्नस्य वाग्व्यवहारविशेषत्वात्, व्यवहारस्य च स्वज(२)नकज्ञानविषयनियतत्वात्। अन्यथा व्यवहाराणां विषयनियमप्रयोजकस्यान्यस्यासंभवेन व्यवहारविषयपारिप्लवापत्तेः ।

टी० ननु, ब्रह्माद्वैतं त्वया निर्वाह्यं, तन्मया खण्डनीयं, प्रपञ्चखण्डनमप्यन्ततस्त्वया निर्वाह्यं, तत्र प्रतिखण्डनं मया कर्तव्यमित्यपर्य्यवसानं तदवस्थमेवेत्याशङ्क्य कथासन्दर्भमुपसंहरति—। ""तस्मादि"ति । यद्यपि "त्वया ब्रह्माद्वैतं स्थापनीयं, मया खण्डनीयम्, इतीदृश्यामेव कथायां मया वक्तव्यं, नान्यत्रे"ति परेणापि वक्तुं शक्यते,* नचैवं कथैव न(३)स्यादिति वाच्यम्*, इष्टापत्तेः; अनिष्टत्वे चास्योभयसमाधेयत्वात्(४)। *ब्रह्म स्वतःसिद्धमेव न तत्र साधनापेक्षा *;—इति चेत्, प्रपञ्चोपि सर्वजनसिद्ध एव न तत्र साधनापेक्षेति तुल्यम् । * सर्वजनसिद्धत्वमपि त्वयोपपादनी(५)यम् *?—इति यदि, तदा स्वतःसिद्धत्वमपि त्वयोपपादनीयमिति तुल्यम् । *तर्हि वितण्डा कथैव न स्यादुभयोरपि स्थापनाप्रस-

(१) तदिति सामान्ये नपुंसकं, स विषयविशेषनियतप्रमाणप्रश्न इत्यर्थः । तदोपपद्यते यदि तादृशं = विषयविशेषनियतं प्रमाणं, ते प्रतीतिमारोहेत् विषयश्चाद्वैतमेवेति भावः ।

(२) स्वस्य = व्यवहारस्य जनकं ज्ञानं स्वजनकज्ञानम्, तस्य यो विषयस्तेन नियतत्वान्नियमेन तद्गोचरत्वादित्यर्थः ।

(३) कथा हि समयबन्धपूर्विका, समयबन्धश्च माण्डनिकेन सद्वैतं ब्रह्म स्थापनीयमित्येव, इदानीं खण्डने प्रवृत्तेन तेन स उपेक्षित इत्यपि कथैव न स्यादित्यर्थः । यद्वा, वैतण्डिकेनाप्यद्वैतव्यवस्थापने वितण्डा कथैव न स्यादित्यर्थः ।

(४) यथा माण्डनिकेन सद्वैतं ब्रह्म स्थापनीयमित्यस्ति समयबन्धस्तथा खाण्डनिकेन तत्खण्डनीयम् (अर्थादद्वैतं व्यवस्थापनीयम् ) इत्यपीति तन्निर्वाहे कथाभावप्रसङ्गस्तस्यापि तुल्य इत्यवश्यं तेनापि समाधेयत्वादिति भावः ।

(५) त्वयोपपादनीयम् = त्वयैवोपपादनीयं, (स्वकपोलकल्पितमिति यावत्) ।

ङ्गात् *?-इति चेत्, शक्ति(१)जिज्ञासया प्रपञ्चवादिनामप्यन्योन्यं
भवात्, तथापि खण्डनयुक्तयो बलवत्य इत्यत्रैव हृदयम् ॥ स्वपक्ष
हरति-। [b] "तदेवमि"ति ॥

---

ननु "ब्रह्मैव परमार्थसत्"-इति त्वयोच्यते, तथाच प्रति
तत्र प्रमाणमुपन्यस्तुमर्हतीत्याह-। [c] "नन्वि"ति ॥ उत्तरमाह-। [d]
एवे"ति । प्रश्न एव तावत् प्रमाणमिति विच्छिद्यापि(२)योजयन्ति।
न्यथानुपपत्तिरेवाद्वैतसाधिकेत्यर्थः ॥ तामेवाह-। [e] "प्रमाणमि"ति।
तज्ज्ञानमन्तरेण तन्नियत(३)विषयप्रमाणप्रश्न एवानुपपन्न इत्यर्थः॥
तमज्ञानानस्यापि तत्प्रमाणप्रश्नः स्यादित्यत आह-। [f] "प्रश्नस्ये
'अद्वैते किं प्रमाणम्' ?-इत्ययं वाग्व्यवहारस्तावज् ज्ञानजन्यः,
तज्ज्ञानविषयविषयत्वध्रौव्यमेवास्य; अन्यथा स्वजनकज्ञानविषया
व्यवहाराणां व्यवहर्त्तव्यनियमो न स्यादित्यर्थः ॥

**मू० "यदि चाद्वैतं प्रश्नविषयः प्रतीतमुच्यते तदा तत्
तिस्तेप्रमा वा स्यात् ? अप्रमा वा ?। आद्ये यदेव त
प्रमायाः करणं तदेवाद्वैते प्रमाणं तत्रापि संप्रतिप
ति वृथा तस्य प्रश्नः।*"नच वाच्यं सामान्यतोऽद्वैत
णसिद्धौ(४)भूतायामपि विशेषतः प्रमाणप्रश्नः*,
सामान्यसिद्धावेवाऽद्वैतसिद्धौ विशेषविचारः का
न्तविचारवत्स्यात्; [d]"सामान्यसिद्धिरेव च विशेष**

---

(१) शक्तिजिज्ञासया = परप्रतिपादनसामर्थ्यज्ञानेच्छया, प्रपञ्चवादिनां
पनावादिनां, तत्संभवात् = वितण्डाकथासम्भवादित्यर्थः । अद्वैतविडका अपि
कुर्वते इति भावः ।

(२) अपिशब्देन 'प्रश्न एव नोपपद्यते'-इत्यन्वयस्तु प्रसिद्ध एवेति भु

(३) तद्=अद्वैतं, नियतो विषयो यस्य प्रमाणस्य तद्विषयकः प्रश्न

(४) अद्वैतप्रमाणसिद्धौ भूतायाम् = अद्वैतप्रमाणसिद्धौ सत्याम् ।

क्षिप्यानयन्ती विशेषमपि ते कथितवती किमत्र प्रश्नेन, [e]परिगणितेषु हि प्रमाणप्रकारेषु मध्ये यत्रैव दोषं न प्रमिणोषि तत्रैव विशेषे सामान्यस्य विश्रान्तेः । [f]यदि च परिचितचरेषु प्रमाणप्रकारेषु सर्वेष्वेव दोषं प्रमिणोषि तदा प्रमाणान्तरमाक्षिप्यापि सामान्येन विश्रमणीयमेव (१) ।

टी० नन्वेतावताऽद्वैतप्रतिपत्तिरायाता, प्रमाणानुयोगस्तदवस्थ एवेत्यत आह–। [a]"यदि चे"ति । अद्वैतमनुमाय, श्रुत्वा, दृष्ट्वा वा तवायं प्रश्नः; तथाचानुमानं, शब्दः, इन्द्रियं वा, तत्र प्रमाणमिति त्वयैव ज्ञायते किं प्रश्नेनेत्यर्थः ॥ ननु, प्रश्नान्यथानुपपत्तिः प्रमाणसामान्यसाक्षिणी भवतु प्रमाणविशेषजिज्ञासा तद्विशेषाभिधानमन्तरेण कथं निवर्ततामित्याशङ्क्याह–। [b]"नचे"ति ॥ अद्वैतसिद्धिरस्मदपेक्षिता, त्वया चाऽनुमता, किमत्र विशेषजिज्ञासयेत्याह–। [c]"यत्र"इति ॥ ननु, तथापि विशेषं पृच्छतः किमुत्तरमत आह–। [d]"सामान्ये"ति। नहि निर्विशेषं सामान्यमिति भावः ॥ नन्वेतावता विशेषत्वेनैव विशेषः सिद्धो नत्वनुमानादिभावेन,- तादृशी च सिद्धिरपेक्षितेत्यत आह–। [e]"परिगणितेष्वि"ति ॥ ननु परितेषु सर्वत्र दोषं पश्यत एव ममायं प्रश्नः ? इत्यत आह–। [f]"यदिचे"ति ॥

मू० "यदि च 'का प्रमाणव्यक्तिरसौ' ?–इति प्रश्नार्थः परिशिष्यते, तदा न सर्वा व्यक्तिर्विशेषतो निर्देष्टुं शक्यते-इति तदनिर्देशेऽपि न नः किंचिदपचीयते । [b]यदि च द्वितीयः, तदानीमद्वैतप्रतीतिमप्रमां मन्यमानस्य तव 'अप्रमाविषये किं प्रमाणम्?'–इति कथं न प्रश्नो व्याहन्यते । [c]अथ "अप्रमा सा मम मते, त्वन्मते तु प्रमैवेति तत्करणं

(१) निर्विशेषसामान्याऽयोगादिति भावः ।

प्रमाणं पृच्छ्यते ?”–इति ब्रूषे, नैतदप्युपपद्यते, 
द्वैते ज्ञानं यदुत्पद्यते तत्करणं मया प्रमाणरूपं वक्त
मित्यत्र ममाऽनियमात् । यदि नाम मया सदाऽद्वै
भ्युपेयते तावता किं तावकीनस्य तज्ज्ञानस्य करण
श्यं प्रमाणं स्यात् ? [d]वस्तुतो वन्हिमत्यपि पर्वते यदि
श्चिद्बाष्पं धूमं प्रतीत्य ततो वह्निमनुमिनोत्येता
किं बाष्पविषयं धूमज्ञानं करणं प्रमाणमेष्टव्यम् ?–इ

टी० नन्वनुमानत्वादयोऽपि प्रमाणत्वविशेषाः सामान्यमेव,
तत्रापि विशेषजिज्ञासया प्रश्नः ? इत्यत आह–। [a]“यदि चे”ति ॥ 
प्रतीतिरप्रमा’–इति पक्षं दूषयति–। [b]“यदि चे”ति । यद्यपि ‘अप्रमा
किं प्रमाणम् ?’ इत्याकारो न मम प्रश्नो येन व्याघातः स्यात्, नच(१)
कारप्रश्नेऽपि व्याघातः, नहि यदप्रमाविषयस्तत्कदापि न प्रमाण
तथाप्यापातस्फूर्तिको व्याघात इत्यर्थः ॥ त्वदभिमानमनुरुध्याऽयं 
मम तु बाधितविषयतया सर्वत्राद्वैतज्ञानमप्रमैवेति न व्याघात 
आह–। [c]“अथे”ति ॥ विषयाऽबाधेऽपि क्वचि(२)त्करणं दुष्टं दृष्टं, त
‘अद्वैतविषयं तत्रापि ज्ञानं प्रमैव(३)दुष्टकरणाजन्या’–इति संभावनायां
तत्र मया प्रमाणं वक्तव्यमित्याह–। [d]“वस्तुत”इति । अत्र, यद्यपि 
ते पुत्राः’ ?–इति प्रश्नमात्रप्रत्याशया पुत्रान् संभावयतो दार(४)परि
दासीनस्य, सर्वजनप्रसिद्धप्रपञ्चविद्वेषिणः शशशृङ्गकूर्मरोमगगनारविन्द

---

(१) अप्रमाविषये किं प्रमाणमित्याकारप्रश्नेऽपि न व्याघातो न हि यदप्र
विषयस्तत्र कदाचित्प्रमाणविषयः, पूर्वक्षणावच्छेदेन रजतत्वेनाऽप्रमाज्ञानविषय
शुक्त्यादेः कालान्तरे शुक्तित्वेन प्रमाणज्ञानविषयत्वादित्याशय–न चेति ।

(२) क्वचित् = वन्हिमत्पर्वतधर्मिकबाष्पलिङ्गकवन्ह्यनुमित्यादौ संवादिभ्रमे

(३) प्रमाऽत्राबाधितार्थगोचरं ज्ञानं, न तु प्रमाणकरणकं ग्राह्यम् ।

(४) दारपरिग्रहेऽप्युदासीनस्य कति ते पुत्राः ?–इति प्रश्नमात्रप्रत्याशया
न्संभावयतस्ते कः प्रतिमल्लः ( प्रतिभटः, वारयितेति तु फलितम् ) इत्यन्वयः ।

प्रमाणप्रश्नबलायातमनन्तं प्रपञ्चं साधयतः, कस्ते प्रतिमल्लः, कथं वा 'ब्रह्म नास्तीत्यत्र किं प्रमाणम्' ?–इत्यनेन प्रश्नेन ब्रह्मनास्तितैव न सिद्ध्येत् । कथायां यस्य यस्य पदार्थस्याभावस्त्वया साध्यस्तस्य तस्य प्रमाणप्रश्नबलात् तत्तत्सत्ता तदानीमेव वाद्यन्तरेण साधनीया इति दुरुत्तरं व्यसनम् वस्तुतो(१)'ब्रह्माद्वैतं घटादिवृत्ति न वा'–इति मध्यस्थविप्रतिपत्तौ 'ब्रह्माद्वैतं घट(२)वृत्ती'ति विधिकोटिपरिग्रहे त्वया कृते तत्र प्रमाणप्रश्ने प्रमाणवचनमेवोचितं, कथासंप्रदायस्य तवापीष्टात्वत्; तद्विप्लवे पुनर्दुरुत्तरव्यसनमेव, तथापि वक्ष्यमाण(३)प्रमाणावष्टम्भादेतदुक्तमिति हृदयम् ॥

**मू० "अस्तु वा प्रश्नोयं यथातथा, श्रुतिरेवाद्वैते प्रमाणमिति ब्रूमः । श्रूयते खलु "एकमेवाद्वितीयं नेह नानास्ति किंचन" इत्यादि । श्रुतिप्रामाण्यं सिद्धार्थप्रामाण्यं चेश्वराभिसन्धौ साधयिष्यते । सिद्धार्थानां(४)श्रुतीनामन्यपरत्वमपि यदि स्यात्तथापि पद(५)समन्वयबलेन तासु प्रतीयमानमर्थमबाधितमादायैव तासामन्यपरिभवनात्(६), धियां स्वतःप्रामाण्यस्य बाधकैकापोद्यत्वात् ।**

---

टी० एतेनैवानुशयेनाह–। "अस्तु वे'ति ॥ नन्वनृत(७)व्याघातपुन-

(१) 'वस्तुत'–इत्यस्य प्रमाणवचनमेवोचितमित्यनेनान्वयः ।

(२) अत्र घटादिवृत्तीति पाठः समुचितः, प्रतिज्ञाया विप्रतिपत्त्यनुगुणत्वौचित्यादित्यनुमन्ये ।

(३) "श्रुतिरेव प्रमाणम्"–इति वक्ष्यमाणं प्रमाणप्रतिवचनमवष्टभ्यैव प्रश्नसहनाभिधानमित्याशयः ।

(४) सिद्धार्थानाम् = अहेयानुपादेयार्थप्रतिपादिकानाम् ।

(५) पदानामेकमेवाद्वितीयमित्यादीनां य उपक्रमादिभिर्लिङ्गैर्ब्रह्मणि समन्वयस्तात्पर्येणाभिधायित्वं तद्बलेनेत्यर्थः ।

(६) अन्यस्य द्वैतावगाहिप्रत्यक्षादेः परिभवनात् तिरस्कारणादित्यर्थः । अनन्यपरिभवनादित्यपि क्वचित्पाठः, तत्राद्वैतैकमात्रपरत्वादित्यर्थः ।

(७) अनृतदोषो यथा पुत्रकामेष्टा 'पुत्रकामः पुत्रेष्ट्या यजेते'ति, नेष्टौ संस्थितायां पुत्रजन्म दृश्यते । दृष्टार्थस्य वाक्यस्याऽनृतत्वाददृष्टार्थमपि वाक्यम् 'अग्निहोत्रं जुहुयात्

रुक्तादिदोषेभ्यः श्रुतीनामेव न प्रामाण्यं, प्रामाण्ये वा सिद्धार्थश्रुतीनां
प्रामाण्यं, विधिप्रत्ययसमभिव्याहृतवाक्यस्यैव ज्ञानद्वारा व्यवहा
त्वेन प्रवर्तकज्ञानं प्रति सामर्थ्यावधारणात्; नच "एकमेवाद्वितीयं
इत्यादिश्रुतीनां कार्योपराग(१)स्तथाच न प्रामाण्यमित्यत आह-।
ति ॥ ननु, यत्परः शब्दः स शब्दार्थः, न त्वासां श्रुतीनां ब्रह्माद्वैते
किं तर्हि, मुमुक्षुणा ब्रह्मैवैकमुपासनीयमित्यत्र तात्पर्यं, तथाचोपास
मेवासां प्रमाणत्वं, नतु ब्रह्माद्वैतेपीत्यत आह—। c "सिद्धार्थानामि
विशेषणं(२)चैतत् प्रकृतश्रुत्यपेक्षया। "एकं,ब्रह्म"इतिपदसमन्वयबले
यमानोर्थः स चोपासनापरत्वेप्यबाधित एव वाच्य इत्यर्थः॥ ननु "
यूपो यजमानः प्रस्तरः"–इत्यादौ पदसमन्वयबललभ्यसामानाधि
श्रुतेरप्रामाण्यं यथा, तथाऽस्याः किं नेत्यत आह—। d "धियामि
तत्र तत्र बाधकात् प्रतीयमानोर्थस्त्यज्यतेऽत्र न बाधकमित्यर्थः॥

—

मू०* ननु,(३)नाऽद्वैतश्रुतीनामृजावर्थे(४)प्रामाण्यं सं
प्रत्यक्षादिबाधात्;ततश्चान्यत्रैव कचित्तात्पर्यं
म*?। मैवम्। यदद्वैतश्रुतेर्बाधकं प्रत्यक्षादि
तदात्मीये विषये घटपटादेर्भेदे नियत एवोत्पद्यते

स्वर्गकाम'इत्याद्यनृतमिति ज्ञायते। विहितव्याघातदोषश्च 'उदिते होतव्यमनु
व्यमि'ति विधाय 'श्यावोऽस्याहुतिमभ्यवहरति य उदिते जुहोति, शवलोऽस्याहु
रति योऽनुदिते जुहोती'ति। पुनरुक्तदोषो यथा अभ्यासे देश्यमाने 'त्रिः प्रथ
त्रिरुत्तमाम्' इति।

(१) कार्य्ये परागः=क्रियोपरागः, हेयोपादेयार्थप्रतिपादकत्वमिति
(२) ननु, 'सिद्धार्थानामि'त्येतद्विशेषणं व्यर्थं, यावता क्रियाऽभिधा
श्रुतीनां तात्पर्य्यतो ब्रह्मण्येव समनुगतत्वेनाऽबाधितार्थमादायैवाऽन्यपरिभाव
प्रसाधनीयमित्यत आह-विशेषणं चैतत्प्रकृतश्रुत्यपेक्षयेति। प्रकृतश्रुतिस्तु-"
तीयमि"त्यादिरूपा।

(३) { अद्वैतश्रुतिबाधाय नाध्यक्षादि प्रकल्प्यते।
अल्पास्पविषयत्वेनेत्येतत्प्रस्तावयत्यय ॥ }
(४) ऋजावर्थे=सिद्धार्थे।

प्रत्यक्षादिकं भूतभाविवर्त्तमानसकलव्यक्तिभेदग्राहि जायमानमावयोः सम्प्रतिपन्नमस्ति, [d]तादृशेन ज्ञानेन चोत्पद्यमानेन सर्वज्ञतां तदा तव श्रद्दध्यां यदि जानासि मम चेतसि किं वर्त्तते इति । [e]यदि च प्रत्यक्षादि किंचिन्मात्रविषयं तदा तद्विषयादन्यत्रापि प्रवर्त्तमानाऽद्वैतश्रुतिस्तेन न बाधितुं शक्यते, स्वविषयमात्रे प्रमया विपरीतविषयज्ञानबाधनात्; अन्यथाऽतिप्रसङ्गात् । [f]मा हि भूद्(१)अग्नीषोमीयपश्वालम्भनविधिना सर्वभूताहिंसाश्रुतेर्वैयर्थ्यम् ।

टी० ननु, प्रकृतेपि बाधकमस्तीति शङ्कते—। [a]"नन्वि"ति ॥ [b]"अन्यत्रे"ति । ईश्वरैकत्वं वा ब्रह्मैकोपास्यत्वं वा प्रतिशरीरमेकैकात्मत्वं वा यद्ग्राह्यं तत्रैव च सामर्थ्यमित्यर्थः ॥ ननु, घटपटमात्रभेदविषयकं प्रत्यक्षं श्रुतिबाधकमिति नोच्यते, किंतु सामान्यलक्षणया प्रत्यासत्त्या सकलपदार्थभेदविषयकमेकं प्रत्यक्षमिष्यते, तत्कुक्षिस्थितानां(२)भेदार्भकाणां न किंचिद्दुयं श्रुतिडाकिन्या इत्यत आह—। [c]"नतु प्रत्यक्षादिकमि"ति । त्वयेष्यमाणत्वमतन्त्रमित्यर्थः ॥ तादृशज्ञाने प्रमाणाभावमाह—। [d]"तादृशेने"ति ॥ ननु, घटपटादिनियतविषयमेव प्रत्यक्षं श्रुतिबाधकमस्तु किमत्याहित(३)मित्यत आह—। [e]"यदी"ति ॥ [f]"मा हि भूदि"ति । "न हिंस्यात्सर्वा भूतानि"—इत्येका श्रुतिः, "अग्नीषोमीयं पशुमालभेत" इत्यपरा, तत्र चानयाऽग्नीषोमीयपशावेवाऽहिंसाश्रुतिर्बाध्यते नत्वन्यत्रापि, विषयभेदादित्यर्थः ॥

(१) अतिप्रसङ्गमेव स्फुटयति—मा हि भूदिति । माभूदिति तु विद्यासागराभिमतः पाठः । विरुद्धार्थग्राहितामात्रेण बाधकत्वमेकविषयत्वाभावेपि चेद्धिंसाविषयत्वेन तदभावविषयत्वस्य विरोधात्पश्वालम्भनविधिना सर्वभूताऽहिंसाविधेर्वैयर्थ्य=निर्विषयत्वमप्रामाण्यं स्यात्तन्माभूदित्यर्थः ।

(२) तत्कुक्षिस्थितानाम्=सामान्यलक्षणाप्रत्यासत्तिकुक्षिनिविष्टानाम् ।

(३) अत्याहितम् = भयम् "अत्याहितं महाभीति"रिति कोशात् । अस्यैवार्थस्याऽविज्ञानात्प्रायः पुस्तकेषु 'किमन्याहितमि'ति प्रकल्पितः पाठो दृश्यते ।

मू० [a]"यदा चैवं, तदा बाधिकायाः प्रत्यक्षधियो बाध्या
श्चाऽद्वैतबोधने श्रुतिर्निराबाधा सती तयोरैक्यं
यतीति तत् प्रत्यक्षादि कथं स्वात्मान(१)मेव बा
[b]घटेन(२), पटेन तद्भेदेन च स्वविषयेण सह तस्या
धियः श्रुत्या सर्वस्याद्वैतं गोचरयन्त्या कथं ना
प्रामाण्यमासादयितव्यम्, तत्राबाध्यमानत्वात्।
(३)तस्या धियः स्वात्मा वा, स्वात्मना सह घट
देर्भेदोपि वा, विषयः । [d]"घटपटौ(४)भिन्नावि
माकारा हि सा जायते, नतु 'अहं घटात् पटाच्च भि
मत्तो वा तौ भिन्नौ'–इति । [e]स्वप्रकाशतापि स्व
साक्षिणी, नतु यतो यतः प्रकाशो भिद्यते तत
स्तस्य भेदेपि। [f]अन्यथा तत्तदपि स्वप्रकाशकुक्षौ नि
पन्ती न कथमद्वैते एव पर्यवस्यति ।

टी० ननु, समाने एव विषये बाध्यबाधकभावोऽस्तु किमेतास्य
त्यत आह–।[a]"यदाचे"ति । बाध्यबाधकधियोरैक्ये बाध्यबाधकभाव
भाव एवेत्यर्थः ॥ बाधकाभिमतप्रत्यक्षस्य विषयेण सह; भेदः श्रुतिवि
इत्याह–।[b]"घटेने"ति ॥ तदेवोपपादयति–। [c]"नही"ति ॥ कथं
आह–। [d]"घटपटावि"ति ॥ मीमांसकशङ्का(५)मपनयति–। [e]"स्वप्र

(१) बाध्यबाधकधियोरैक्ये बाध्यायाः श्रौतधियो बाधने प्रत्यक्षेण
एव बाधः कृतः स्यादिति भावः ।

(२) घटेनेति, सर्वस्याऽद्वैतं गोचरयन्त्या श्रुत्या घटेन, पटेन, तद्भेदेन च
येण (घटपटौ भिन्नावित्येत्वं विधभेदग्राहिप्रत्यक्षविषयेण) सह तस्या धियः (भे
प्रत्यक्षधियः) अभेदबोधने प्रामाण्यं कथं नासादयितव्यम्–इत्यन्वयः ।

(३) नहीति, स्वविशिष्टभेदग्रहणे यतः स्ववृत्त्यापातादित्यर्थः ।

(४) घटपटाविति यदाकारा बुद्धिर्जायते तदाकारवानेवार्थस्तद्विष
नियमाद्बुद्धिधर्मिकबुद्धिप्रतियोगिकभेदाकारत्वाभावाच्चानया तत्सर्वं भावत र्थः ।

(५) बुद्धेः स्वप्रकाशत्वात्स्वभेदग्राहकत्वमुपपद्यते इति मीमांसकशङ्का

"ति ॥ ननु, यतो यतः प्रकाशो भिद्यते तत्सर्वं स्वप्रकाशज्ञानविषयश्चेत्यत आह-। f "अन्यथे"ति । स्वप्रकाशबलेन तत्सर्वं तदा भासेत यदि तदपि स्वं भवेत् तथा च स्वभिन्नत्यापि सर्वस्य स्वप्रकाशज्ञानात्मत्वे नरद्वैतमेव पर्यवस्येदित्यर्थः ॥

मू० *a"नच तथा धिया स्वस्य, स्वविषयस्य च स्वरूपावगाहने स्वरूपलक्षणो भेदः प्रकाशित एव स्यादिति वाच्यम् *, "पुरोवर्त्ति रजतमि"ति भ्रान्तौ पुरोवर्त्यात्मनो रजतात्मनश्च प्रकाशे भेदग्रहापत्तेः । b धर्मविशेषमन्तर्भाव्य स्वरूपस्य भेदत्वे धियोऽपि तथा स्यादिति सैव धीर्न तत्प्रकाशस्तस्मिन्सन्निकर्षाद्यपेक्षायां धियः प्राक्तदसंभवात् । c *आत्मवदात्मधर्म्मेऽपि सन्निकर्षानपेक्षा सा*?-इति चेन्न, d ग्रहणत्वस्मृतित्वप्रमात्वादावपि तथैव स्यादिति

टी० ननु, स्वप्रकाशज्ञानस्य स्वं विषय इति विषयाद्[1], घटपटादेः ...स्य स्वरूपभेदः कथं न विषयो भवेदित्यत आह-। a "नचे"ति । ...रूपभेदग्रहस्याऽभेदग्रहपरिपन्थित्वे भ्रमः क्वापि न स्यात्तस्य[2] ते ...रोप्यारोपविषयग्रहपूर्वकत्वात्, तस्य चारोपपरिपन्थित्वादित्यर्थः ॥ ननु, ...रूपमात्रं न स्वरूपभेदः, किंतु परस्परवैधर्म्यविशिष्टं स्वरूपं तच्च शुक्ति-...तयोर्न गृहीतमिति नारोपानुपपत्तिरित्यत आह- b "धर्म्मे"ति । तर्हि ...योऽपि स्वरूपमात्रं न भेदः, किंतु वैधर्म्यालिङ्गितं स्वरूपं, वैधर्म्यं च ...स्य[3] प्रकाशत्वेऽपि न स्वविषयः, किंतु संयुक्त[4]समवेतसमवायेन प्रत्या

(१) घटपटादेर्विषयादित्यन्वयः ।

(२) तस्य=भ्रमस्य, आरोप्यारोपविषयग्रहपूर्वकत्वात्,=आरोप्यं रजतादिरारोपविषयोऽधिष्ठानं शुक्त्यादिस्तदुभयस्वरूपग्रहणपूर्वकत्वात, तस्य च=आरोप्य रोपविषयरूपभेदग्रहणस्य च, आरोपपरिपन्थित्वात्=भ्रमपरिपन्थित्वेन त्वयाङ्गीकारादित्यर्थः ।

(३) स्वस्य=ज्ञानस्य, प्रकाशरूपत्वेऽपि न ज्ञानविषय इत्यर्थः ।

(४) मनःसंयुक्त आत्मा, तत्समवेतं ज्ञानं, तत्र समवायो ज्ञानत्वादेर्वैधर्म्यस्ये-

सत्त्या मनसा तद्ग्रहो भवेत्, नच(१)स्वोत्पत्तेः पूर्वं स्वघटितसंयुक्त समवायः प्रत्यासत्तिः संभाव्यते इत्यर्थः ॥ ननु, यथा प्रत्यासत्ति स्वग्रहस्तथा स्वधर्मग्रहः स्यात् को दोष इत्यत आह(२)—। "आ ति ॥ [d] "ग्रहणत्वे"ति । तथाच ग्रहणत्वस्मरणत्वसंशयो न स्या प्रामाण्याऽप्रामाण्यसंशय इति भावः ॥

मू० "तदेवं सा बुद्धिः श्रुत्या घटपटात्मतया व्यवस्था ना कथमात्मनः(३)स्वस्मादेव भेदे प्रमाणीभवितु तीति' बाधिकायां बुद्धौ घटपटयोर्भेदे प्रमात्वाभ सादयन्त्यां श्रुतिस्तत्र(४) तत्राप्रतिद्वन्द्वित्वाऽस तस्वतः प्रामाण्यबललब्धतत्तदर्थैक्यान्यथानुप हायसम्पदऽजय्या तयोरप्यभेदं बोधयन्ती न प्र शक्येति न(५) क्वचिदपि प्रतिहतप्रसरा सती स प्रमापिकेति । [c] भेदप्रमान्यथानुपपत्त्या च वै मशक्यम् ।

टी० ननु, तया धिया स्वस्य स्वरूपभेदोऽपि मा गृह्यतां मित्यत आह—। [a]"तदेवमि"ति । घटपटभेदग्राहकं यत्प्रत्य

(१) नच ज्ञानोत्पत्तेः पूर्वं ज्ञानघटितनिरुक्तप्रत्यासत्तिरित्यर्थः। अयं चिकर्षस्य बुद्धिजन्मार्थत्वाद्बुद्धेः प्रागेवासौ वक्तव्यो न च तत्संभवति बुद्ध्या मवेतधर्मसन्निकर्षासंभवादन्यथाऽन्योन्याश्रयादित्यर्थः ।

(२) इत्यत आह, 'इति चेन्न'-इत्यन्तं सिद्धान्त्याहेत्यर्थः, अत आत्मा पूर्वपक्षग्रन्थत्वेऽपि नाऽयुक्तिः। एवमग्रेऽप्येवंविधस्थले ज्ञेयम् ।

(३) आत्मनः = स्वाभिन्नघटस्य, स्वस्मात् = स्वाभिन्नघटादित्यर्थः।

(४) बाध्यबाधकबुद्ध्योर्बाध्यबुद्धेश्च स्वविषयैरभेदबोधनेऽप्रतिद्वन्द्वि चितश्च तत्स्वतःप्रामाण्यं चेति तयोक्तम्, तस्य बलं = सामर्थ्यं, तेन लब्धमर्थ याऽसङ्कुचितस्वतःप्रामाण्यबललब्धं,तच्च तत्तदर्थस्यैक्यं चेति तयोक्तं, तस्य याऽनु सहायस्तस्य संपत् तयाऽजय्या क्वचिदपि प्रतिहन्तुं न शक्येति सर्वाद्वैतप्रमा

(५) श्रुतिः क्वचिदपि प्रतिहतप्रसरा न सती सर्वाऽद्वैतप्रमापिकेति

त्या घटपटाभिन्नं कृतं तदा घटपटभेदग्राहकतैव तस्य न निर्वहेदित्यर्थः॥ नु, घटपटयोर्भेदे सा धीः प्रमाणमतस्तद्द्वयेन श्रुतिस्तत्र कथं प्रवर्तेत याच घटपटौ विहायाऽन्यत्राद्वैतं सिद्ध्यति नतु तयोरपीत्यत आह-। 'बाधिकायामि''ति। घटपटभेदग्राहिणी या बुद्धिस्तया सह घटपटयोरभेदं हीतवती श्रुतिः घटपटयोरभेदमन्तरेणानुपपद्यमाना तयोरप्यभेदमानति। किंच, पटाभिन्नबुद्ध्यभिन्नत्वाद् घटोऽपि पटाऽभिन्नः साधयितुं र्य्यते एवेति तदु(१)पष्टम्भोऽपि श्रुतेः। न चास्याः परग्राह्यं प्रामाण्यं, येन दादायापि द्वैतं निर्वहेदिति न किंचिदस्याः श्रुतेः परिपन्थीत्यर्थः॥ नु, घटपटभेदप्रमैव तद्भेदमन्तरेणानुपपद्यमाना सर्वत्र श्रुतिमपसारयिष्यीत्यत आह-। ''भेदप्रमे''ति॥

मू० ''तत्राद्वैतश्रुत्या सन्दिह्यमानस्य प्रमात्वस्यैवासिद्धेः'
ᵇभेदधीमात्रस्य च द्विचन्द्रादिबोधवदन्यथाप्युपपत्तेः।

टी० श्रुतिप्रामाण्यमुभयसिद्धं, प्रत्यक्षप्रामाण्यं चान्यतरमात्रसिद्धमिति परिपन्थिश्रुतिदर्शनात्तत्रापि तत्र(२)सन्देहः स्यादिति भेदप्रमान्यथापपत्तिर्दुर्बला न श्रुतिपरिपन्थिनीत्याह-। ᵃ''तत्रे''ति॥ ननु सन्दिह्यतां ामाण्यं, भेदज्ञानमगृहीतप्रामाण्यमेव श्रुतिबाधकं स्यादित्यत आह-। ''भेदे''ति। अन्यथासिद्धिशङ्काकलङ्कितस्य न विरोधिज्ञानप्रतिबन्धकत्वमित्यर्थः। अत्र, यद्यपि (३) सर्वभूताहिंसाश्रुतिरग्नीषोमीयपश्वालम्भनबोधकया श्रुत्या सङ्कोच्यते नतु बाध्यते; प्रत्यक्षेण तु प्रवृत्तमात्रेणाद्वैतश्रुतिाध्यत एवातो न क्वाप्यस्याः प्रसरः, नहि 'घटपटौ भिन्नौ' एकमेवाद्वितीयं ह्म'-इति ज्ञाने संभवतो विरोधात्। * दैत्तः पशुर्हिंस्यः, सर्वभूतमहिंस्यमित्यनुपपन्नम् *?-इति चेत्तत्र सर्वपदकृतपदयोर्विषयसङ्कोचेन दैत्तपशु-

(१) घटपटाभेदाश्रयणमपि विषयतया श्रुतेरावश्यकमित्यर्थः।
(२) तत्र = प्रत्यक्षे, प्रामाण्यसन्देहः स्यादित्यर्थः।
(३) मा हि भूदग्नीषोमीयपश्वालम्भनविधिना सर्वभूताहिंसाश्रुतेर्वैयर्थ्यमित्याशङ्क्योक्तमर्थमाक्षिप्य समाधत्ते-यद्यपीत्यादिना।

भिन्नं सर्वमद्विंसर्यमिति सामञ्जस्यसंभवात्, इह 'घटपटभिन्नं सर्वं समञ्जसे(१) क्रियमाणे महदसमञ्जसं, त्वदभ्युपगताद्वैत(२)भङ्गात् ण(३) तयोरप्यभेदोऽर्थापत्त्या पर्य्यवस्येत् * ?–इति चेत्तर्हि न प्रमाणं, बाधविषये कुण्ठितत्वात् । किंच, तत्त(४)त्प्रत्यक्षशार्दूल संप्रविष्टं भेदमवलोक्य पलायमाना श्रुतिरियमबला प्रतीयमानं संत्यजन्ती ब्रह्मानुचिन्तनमात्रपरैव स्यात् । किंच, "बाधव्याधभे माऽद्वैतश्रुतिमृगी, ब्रह्मारण्येऽपि विश्वासं कथमासादयिष्यति" मिति श्रुत्यर्थः स्वस्मात्सर्वमभिन्नमेवेत्येतावताप्युपपद्यते एव । नास्ति किंचन"–इत्यपि किंचन वस्तु न नानेत्येवमप्युपपद्यते । नहि वस्तु नाना, सर्वस्य वस्तुनः प्रत्येकमेकत्वात् । किंच, ब्रह्माद्वैतं सकलानुमतमेव । किंच, यदि ब्रह्ममात्रावशेषं जगदिति बोध्यं, तदा वैकम्"–इति स्यान्न तु "एकमेव ब्रह्मे"ति । किंच, यथा 'एक तिरत्र, नतु नाना'इति वाक्यं द्वितीयं नरपतिमेव निषेधति नतु मपि नास्तीति(५)ततः प्रतीयते । किंच, तात्पर्य्याधीनं श्रुतिप्रामा कुत्रार्थे तात्पर्य्यमित्यनिश्चयाद् दुर्बलायाः श्रुतेरेव सर्वत्र प्रत्यक्षेण बाधः । किंच, चैत्रस्य घटपटभेदज्ञानं, मैत्रस्य कटकुट(६)भेदज्ञानं, तस्य नटविटभेदज्ञानम्, इति तत्तदन्यसर्वाद्वैतार्थत्वे श्रुतेर्वाक्यभे

(१) सामञ्जस्ये इति सूचितम् ।

(२) घटपटयोर्भेदव्यवस्थितावच्छेदकावच्छेदेनाभ्युपगताद्वैतभङ्गादि

(३) घटपटभेदविषयकबुद्धेः स्वविषयाद्भेदव्यवस्थितौ तदन्यथानुपपत्त्या घटपटयोरप्यभेदो व्यवतिष्ठेतेत्यर्थः ।

(४) तत्तत्प्रत्यक्ष=घटपटादिभेदावगाहिप्रत्यक्षमेव शार्दूलस्तन्मुखकुहरे विवरे, प्रविष्टं भेदं विलोक्येत्यर्थः ।

(५) इति = इत्यमेव, ततः = एकमेवाऽद्वितीयमितिवाक्यात् ...न्तरनिषेधः प्रतीयते–इति कथंचिद्व्याख्येयम् । वस्तुतस्त्वयं दृष्टान्तपरो ग्रन्थः, ...कपरस्तु कथञ्चिद्गलितो वाऽध्याहर्तव्यो वेति प्रतिभाति ।

(६) कुटो घटः, "घटः कुटनिपावस्त्री"ति कोशात् ।

(७) वाक्यभेदस्तु एकस्यैव वाक्यस्य युगपद्विभिन्नार्थद्वयाऽभिधायकत्व

किंच, अभेदज्ञानस्य 'तानेव(१)तित्तिरीन्' 'तानेव शालीन्'-इतिवदेक धर्मोपग्रहेणाप्युपपत्तिः, भेदग्रहस्तथा नान्यथोपपादयितुं शक्य इति प्रत्य मेव बलीयः । किंच, सर्वमभिन्नं, घटपटौ भिन्नाविति बुद्ध्योः प्रामाण्ये भवति क्व बाध्यबाधककल्पनापि, नहि(२)प्रमेयत्वादिनापि सर्वमभिन्नं न न्यामहे, तथापि(३)"आपाततो यदिदमद्वयवादिनीनाम् इत्यादावेव तात्पर्य्यम् ॥

मू० *a*"'एकम्-इत्युपादाय यद् एवकारमप्युपादत्ते श्रुतिः "एकमेवेदम्"-इतिरूपा, तदैकान्तिकमैक्यं बोधयतीति भेदाभेदेनाप्यशक्यसमर्थनं-घटपटादिभेदग्राहिप्रत्यक्षादिप्रामाण्यमिति ।

टी० ननु श्रुत्याऽभेदः, प्रत्यक्षेण च भेदो बोध्यते, द्वयं च प्रमाणमविरोध्यं, ततो भेदाभेद एवास्त्वित्यत आह— *a*"'एकमि"ति । यद्यपि ब्रह्मणा एकत्वं प्रपञ्चाभावे प्रपञ्चाभेदे चोपपद्यते इति कथमियं श्रुतिरेवकाऽवधारिका(४) यद्यपि च प्रपञ्चमिथ्यात्वं शङ्कराचार्याद्यनुमतं ननु प्रपञ्चब्रह्मणोरभेद इत्यभेदबोधकतया श्रुतिव्याख्याने ऽपसिद्धान्तः, यद्यपि घटाद्यभेदे ब्रह्मणोपि जडत्वमिति स्वप्रकाशानन्दरूपत्वविरोधस्तथाप्यापाततो यदिदमित्यादौ वक्ष्यमाणेऽर्थे एव तात्पर्य्यम् ॥

मू० *"बुद्धेर्विरम्य व्यापाराभावात् कथमित्थम्*?-इतिचेन्न *b*"श्रुतितो द्रागेव जातायाः सर्वविषयाया अद्वैतधियो(५)-

---

(१) पूर्वदृष्टसजातीयतित्तिर्य्यादिदर्शने यत्र तानेव तित्तिरीन् (विहगविशेषान्) पश्य, तानेव शालीन (तण्डुलानि)पश्येत्यभेदावगाहिनी प्रत्यभिज्ञा, सा तित्तिरित्वशा(लि)त्वलक्षणैकधर्मोपग्रहपूर्विका यथा, तथा प्रकृतेप्यभे ज्ञानस्योपपत्तिरित्यर्थः ।

(२) सर्वमभिन्नमित्युक्तमुपपादयति-नहीति । प्रमेयत्वादिनाऽभेदः, घटत्वपटत्वादिना तु भेद इति भावः ।

(३) तथापीत्येतद्दूरव्यवहितेन यद्यपीत्यनेनाऽन्वेति । आपातत इति, अद्वैतप्रतिपादनमप्यापातत एवेति निर्गलितार्थः ।

(४) 'विधायिका'-इत्यपि क्वचित्पाठः ।

(५) अद्वैतधिय एवं विधविचारसोपानपरम्पराम् (क्रमिकाऽभेदविषयकप्रतिप.

समुद्भूय एवंविधविचारसोपानपरम्परामारो
नानाविषयेषु तत्प्रामाण्यविषयाः क्रमेण प
तिष्ठन्तीत्युच्यमानत्वात् । * 'ननु, यदि नामप्र
विरया तया घटपटभेदोल्लेखिन्या स्वात्मना स
पटयोर्भेदो न गोचरीक्रियते तावता कथं तस्याः
षयेण सहाऽद्वैते श्रुतिः प्रामाण्यमासादयितुमीष्टे
न्तरेण तथा सार्द्धं घटपटयोरपि भेदमुल्लिखता

ननु 'प्रत्यक्षविरोधादापाततः श्रुतिजबुद्धिः स्वस्मादेवाभे
याणां विषयीकृत्य क्रमेणार्थापत्त्यादिबलाद् विषयाणामन्योन्यमभे
यीकरिष्यती'त्यनुपपन्नं शब्द(१)बुद्धिकर्मणां विरम्य व्यापाराभावादि
a "बुद्धे"रिति ॥ श्रुतित एकदैव जातायाः सर्वाभेदबुद्धेः सर्वविषये
प्रत्यक्षबाधेन प्रतिबन्धाज् झटिति दुर्ग्रहमिति तत्तद्विषयप्रत्यक्षबा
सक्रमनिबन्धनः प्रामाण्यग्रहक्रमो नतु बुद्धेर्विरम्य व्यापारतेत्याह-
त" इति । यद्यपि बाधो(२)बुद्धिमेव प्रतिबध्नाति नतु तत्प्रामाण्य
कथं न बुद्धेः श्रुतिलक्षणस्य शब्दस्य वा विरम्य व्यापारता तथापि "
ऽसत्यपि(३)ज्ञानमर्थे शब्दः करोती"त्यभिप्रेत्यैतदुक्तम् ॥ घटपटा
प्रत्यक्षेण स्वात्मना सह घटपटयोर्भेदो न गृहीत इति तत्र श्रुति
तयोरप्यभेदं विषयीकरिष्यतीति यदुक्तं तत्र शङ्कते-। c "नी
घटपटभेदग्राहिप्रत्यक्षं घटपटौ न भवत इति ज्ञानान्तरेण तद्वै
एवेति तत्रापि श्रुतिर्न प्रभवतीति शङ्कार्थः ॥

---

त्तिपरम्पराम्) आरोहन्त्योऽस्मद्बुद्धयो नानाविषयेषु तत्प्रामाण्यविषयाः (अभे
माण्यविषयाः) क्रमेणपरितिष्ठन्तीत्यन्वयः ।

(१) शब्द एकं बोधं जनयित्वा विरतव्यापारो न शाब्दबोधान्तरं
तथा बुद्धिरप्येकस्मिन्नर्थे ज्ञाततां संस्कारं वा जनयित्वा न ज्ञाततान्तरं संस्का
एवं कर्माप्येकत्र विभागमुत्पाद्य न विभागान्तरमित्यर्थः ।

(२) "घटपटौ भिन्नौ-"इत्याकारको बाधः, बुद्धिं-श्रुतिजाऽभेदबुद्धिं

(३) अत्यन्तासन्नर्थः शशशृङ्गादिस्तत्रापि चेच्छब्दो ज्ञानं जनयति कि
मद्वैते इति भावः ।

मू० "तर्हि तस्या अपि विषयमापाततः परित्यज्य यथैवापरया बुद्ध्या घटपटभेदबुद्धेर्घटाच्च पटाच्च भेदो विषयीक्रियते तस्याः स्वविषयेण सहाऽद्वैते श्रुतिः प्रामाण्यमवलम्ब्य लब्धपदा घटपटतद्भेदबुद्धिभिः सह द्वितीयाया बुद्धेरभेदे पर्य्यवस्यन्ती सर्वेषामेव तेषामभेदे विश्राम्यति । [b] एवं च सति यत्रैव गत्वा बाधबुद्धिपरम्पराविच्छेदो विषयान्तरसंचारोच्छेदभयादनवस्थाभयाच्चाभ्युपेयस्तस्यामेव बुद्धौ पदमारोप्याऽद्वैतश्रुतिः सर्वं तद्विषयविषयिप्रवाहमद्वैते स्थापयन्ती न केनापि प्रमाणेन क्वचिदपि विषये बाधितुं शक्या । तस्मात्--

[c] सुदूरधावनश्रान्ता (१) बाधबुद्धिपरम्परा ।
निवृत्ताऽद्वयाम्नायैः पार्ष्णिग्राहैर्विजीयते ॥ ८ ॥

टी० यावद्दूरं बाधबुद्धिपरम्परोदयस्तत्रापाततः कुण्ठापि श्रुति-
ाधबुद्धिपरम्परानिवृत्तौ चरमबुद्धौ पदमारोप्य तद्विषयविषयिप्रवाहाद्वैतं
ाधयिष्यतीति परिहरति--। [a] "तर्हि तस्या अपी"ति । प्रमाण्यावल-
बनम्=अबाध्यत्वेन व्यवस्थितत्वं; पदलाभः=सहकारिसाचिव्यं ; पर्य्य-
सानमभेदबोधनं ; विश्रामः=स्वजनितसकलाऽद्वैतधीप्रामाण्यासादनम् ॥
नु भवेदेवं यदि भेदबुद्धिधाराविश्रामः स्यात्त त्वेवमत आह--। [b] "एवं

(१) सुदूरधावनश्रान्ता, भूरिकत्वानुसरणाऽलसेति यावत् । इदमत्राकूतम्-- "अ-
र्मित्रमरेर्मित्रं मित्रमित्रं ततः परम् । तथाऽरिमित्रमित्रं च विजिगीषोः पुरःसराः ॥
ार्ष्णिग्राहस्ततः पश्चादाक्रन्दस्तदनन्तरम् । आसारावनयोश्चैव विजिगीषोस्तु पृष्ठतः ॥
रेश्च विजिगीषोश्च मध्यमो भूम्यनन्तरः । अनुग्रहे संहतानां व्यस्तानां च वधे प्रभुः ।
ण्डलाद्बहिरेतेषामुदासीनो व्यवस्थितः" इति विजिगीषो राज्ञो द्वादश राजमण्डलम्,
त्र खलु यथा लोके कश्चिद्विजिगीषुर्दूरे प्रस्थितः परग्राहिनीं विजित्य निवृत्तो पार्ष्णि-
ग्राहैर्विजीयते तथा बाधबुद्धिपरम्पराऽद्वैतपरम्पराजयाय दूरं प्रस्थिताऽनवस्थाना क्वचि
न्निवृत्तौ पार्ष्णिग्राहैरद्वयाम्नायैर्विजीयते इति । क्वचिद् "विनिवृत्ताऽद्वयाम्नायैः"-- इति
पाठः ।

वे"ति । विषयान्तरसंचारदर्शनेनाऽनिर्मोक्षप्रसङ्गभयेन च विश्रा
त्यर्थः ॥ ᶜ"सुदूरे"ति अद्वयाम्नायैः=अद्वैतश्रुतिभिः । पार्ष्णिग्राहैः
वर्त्तिभिर्विपक्षैरित्यर्थः । यद्यपि चरमबुद्धिज्ञाने चरमत्वव्याघा
ज्ञाने च कुत्र श्रुतेः पादारोपणं, श्रुतिप्रवृत्त्यर्थं त्वयैव तदुपस्थाप
रमत्वव्याघातः, तदैव तयापि समं भेदग्रहश्च; अनुपस्थापने श्रु
व्युत्पादनम्, तथाच "सुदूरधावनाऽश्रान्ता बाधबुद्धिपरम्पराऽद्वि
द्वयाम्नायैः पार्ष्णिग्राहैर्न जीयते"-- इति परेणापि पठितुमुचित
पि स्वप्रकाशसिद्धमेव ब्रह्माद्वैतमिति भावः ॥

मू० ᵃ *नच यत्र तस्य प्रतिपत्तुर्बुद्धिधाराविश्रा
पुरुषान्तरबुद्धिर्भेदे प्रमाणं स्यात् * । ᵇतथापि
न्तरेण भिन्नतया सा(२)प्रतीयते इत्यत्र प्रमाण
वाच्यम् । ᶜनहि तदपि पुरुषान्तरेणैव, ᵈन च
व्यमानम्, श्रौतेन निश्चयेन तन्निवर्तनात्; ᵉत
वस्थानादिति । ᶠअथ ब्रूषे-*यदा कियद्दूरं बु
म्परया सा बाधिता भवत्यद्वैतश्रुति(३)स्तदा त
थापि बुद्धिःशेषं गत्वा नाऽनुव्यवसीयते तत्रापि

(१) अत्र यत्खण्डनभूषामणिकृता रघुनाथस्य शङ्कराभिमतमनूद्य "तत्र
यद्बाधबुद्धिमपेक्ष्य तस्याचरमत्वात् । मम तदुपस्थापने त्वया तदैव भेदो ग्र
पि न, मयाऽभेदं गृहीत्वैव तदुपस्थापनात् । यथा तव भेदग्रहस्तद्विरोधी त
द्वैतग्रहस्यापि भेदग्रहविरोधित्वादित्यलं काव्यरचनाकुशलानां तेनैव स्वाद
यतां खण्डनकथया"-इति खण्डनं, तच; खण्डनकोटेः सर्वतो बलवत्त्वेन
र्यमाणोऽस्याप्यर्थस्याऽप्रतिष्ठितत्वात्स्वप्रकाशसिद्धमेव ब्रह्म, न तु श्रुतियुक्ति
धनापेक्षेत्यत्रैव तात्पर्यात् ।

(२) सा=अन्तिमबुद्धिः, स्वविषयाद्भिन्नतया प्रतीयते- इत्यत्र प्रमा
वाच्यं, नच तद् वक्तुं शक्यमनवस्थानादिति भावः । क्वचित्तु "सा प्रमीयते"-इ

(३) अद्वैतश्रुतिर्बुद्धिपरम्परया कियद्दूरं बाधिता भवति यदा, तदा
शेषं गत्वा (शेषमवशिष्टां कक्षां गत्वा) नानुव्यवसीयते (ज्ञानान्तरवेद्या न
समानन्यायात्तत्राप्यद्वैतश्रुतेर्बाधो गम्यते इत्यर्थः । तन्न्यायादित्येतद्व्याख्या
यत्र=क्रान्तपदबुद्धिपरम्परायां, साऽद्वैतश्रुतिर्बाध्यते तत्तुल्यन्यायत्वाद्=अन्ति
बुद्धित्वाऽविशेषादित्यर्थः ।

धोऽवगम्यते, यत्र सा बाध्यते तत्तुल्यन्यायत्वाद-
न्तिमबुद्धेरपि·–इति । नैवम् । किं कियतीषु
बुद्धिषु व्याप्यव्यापकौ कावप्यवलम्ब्य व्याप्तिग्रह-
रूपयैव धिया शेषबुद्धौ बाधं व्युत्पादयसीत्थमद्वै-
तश्रुतेः ? किं वा बुद्ध्यन्तरदृष्टव्याप्तिसनाथया पक्ष-
धर्म(१)हेतुमुल्लिखन्त्या बुद्ध्यान्तिमबुद्धिविषयया ? ।

टी० ननु विषयान्तरसंचारदर्शनादनवस्थाभयाच्च बुद्धिधाराप्रवा-
विच्छेदसिद्धावपि पुरुषान्तरबुद्ध्या तद्बुद्धिधाराविषयविषयिपर्य्यन्तभेदया-
ऽनया श्रुतेर्बाधोऽस्त्वित्यत आह–। [a] "नचे"ति ॥ [b] "तथापी"ति। पुरु-
षान्तरेण चरमबुद्धेर्भेदो गृह्यते–इति यदि त्वया कथायामेव प्रमापणीयं
तदा तत्रैव प्रमाणे श्रुतिप्रवृत्तिः, एवं(२)तत्रतत्रेति पुनरनवस्था, प्रमाणानु-
पदर्शने च तव पराजय एवेत्यर्थः ॥ ननु न मया तत्र प्रमाणं वाच्यं, किं
तर्हि, पुरुषान्तरेणैव वाच्यमतो नानवस्थेत्यत आह–। [c] "नही"ति।
तद्दोषतादवस्थ्यादिति(३) भावः ॥ ननु यद्यपि मदीयान्त्यबुद्धेः स्वधि-
याद्भेदो मया न गृह्यते, यद्यपि च 'पुरुषान्तरेण गृह्यते'–इति मया प्रमा-
णयितुं न शक्यते, तथापि संभाव्यते तावत्, संभावनापि च विरोधिन्येव
विपरीतनिश्चयस्येति कथं तत्राप्यद्वयश्रुतिप्रवृत्तिरित्यत आह–। [d] "नचे"-
ति । संभावनया प्रमाणाऽप्रवृत्तावनुमानादिकमपि न प्रवर्ततेत्यर्थः ॥
ननु तर्कादिना विपरीतशङ्कानिवृत्तावनुमानादि प्रवर्तते, नतु तस्य
तस्यामेव, प्रकृते तु तथाविधतर्को नास्ति यः संभावनां विहन्यादत
आह–। [e] "तथाप्यनवस्थानादि"ति । यद्यपीयमनवस्था तुल्यैव, संभाव·

(१) पक्षस्य यो धर्मः हेतुर्बुद्धित्वादिस्तमुल्लिखन्त्याऽनुमानरूपया धियेत्यर्थः ।
(२) एवं तत्रतत्र प्रमाणे प्रमाणान्तरप्रदर्शने त्वऽनवस्थेत्यर्थः ।
(३) पुरुषान्तरेणापि प्रमाणप्रदर्शने तत्प्रदर्शितप्रमाणे प्रमाणान्तरं पुनस्तत्प्रमाणे प्रमाणान्तरमन्येन प्रदर्शनीयमिति पुनरप्यनवस्थानाद् अप्रदर्शने च तत्रैव लब्धपदायाः श्रुतेः सर्वाभेदे पर्यवसानादित्यर्थः ।

ना(१)मनुपनयत(२)स्तवापि श्रुतिविषयाऽनुपन्यासात्; तथा "प
यदिद"मित्यादावेव तात्पर्यम् ॥ या या बुद्धिः सा सा स्वविष
घटपटौ भिन्नाविति बुद्धिवदिति त्रिचतुः कक्षायां बुद्धिधाराया
धारणादन्तिमबुद्धावपि तद्बलात्स्वविषयभेदसिद्धौ क्व श्रुतेरवकाश
कुते—। [f] "अथे"ति ॥

**मू०** "नाद्यः व्याप्तिबुद्धिर्यदि विषयविशेषेपि स्वात्
बाधात्मिकोपेयते तदा सैव विशेषबुद्धिरपि
गतमनुमानकथया । अथानुमितिमभ्युपैषि, [b]त
नात्मानमपि धर्मीकृत्य प्रवर्त्तते इति तत्रैव
(३) सर्वामद्वैतश्रुतिः परम्परामालम्बते—इत्युक्त
ते । [c]अथ * सर्वा विवादाध्यासिता बुद्धयः
षयेभ्यो भिन्ना, बुद्धित्वाद्, घटपटबुद्धिवदिति
मान्याकारेणात्मानमपि धर्मीकृत्यात्मनोपि
याद्वेदं साधयिष्यत्यनुमा ? *—इति मन्यसे,
एवमपि विषयिणो विषयस्याऽभेदं बाधयन्ती
रनुमानमप्यनवकाशयति ।

टी० व्याप्तिधीरेव तत्र प्रमाणम् ? तदुपलम्भादनुमानं वा
—इति विकल्प्य दूषयति(४)—। [a] "नाद्य"इति । व्याप्तिग्राहक
विशेषोपस्थितौ सामर्थ्यैनुमानं प्रमाणमनवकाशमेव(५) स्या

(१) सर्वथापि भेदस्याऽसंभाव्यमानत्वे ऽभेदोपि श्रुत्याऽशक्योऽभावः)-
भेदसंभावनापूर्वकस्यैव तस्य वक्तव्यत्वेन यथायथा भेदसम्भावनायामनवस्था
मदभेदबोधनेपि पर्यन्ततो यत्रैवाऽभेदो न बोधनीयस्तदारभ्याऽऽमूलमभेदता
त्याह—संभावनेति ।

(२) "अपनयतः"—इत्यपि क्वचित्पाठः ।

(३) तत्रैव दत्तपदाऽद्वैतश्रुतिः सर्वामद्वैतपरम्परामालम्बते—इति

(४) आद्यं पक्षं दूषयतीत्यर्थः ।

(५) पक्षधर्मताबलेनाऽनुमानेनैव हि वन्ह्यादेः पर्वतीयत्वादितर्क
व्याप्त्यैव च तत्सिद्धावनुमानं निरर्थकमेव स्यादित्यर्थः ।

न्तिमबुद्धिः स्वविषयाद्भिन्ना बुद्धित्वादाद्यादिबुद्धिवदित्यनुमानं. तदुपापकमिति द्वितीयमाशङ्क्य निराकरोति-। [b] "तदे"ति। अनुमितावेव पदरोप्याऽद्वैतश्रुतिः सर्वाभेदबोधिका तर्हि स्यादित्यर्थः ॥ नन्वनुमितिमपि तेन्तर्भाव्य विषयाद्भेदः साधनीय इति तत्र श्रुतिप्रवृत्तिरनुपपन्नेत्याशङ्क्- [c] "अये"ति ॥ एतावता च विषयाद्बुद्धेर्भेदः सिद्धो नतु बुद्धेरपि विस्य, अप्रतिज्ञानात्, तथा च बुद्धितो विषयस्याभेदबोधने निष्प्रतिपन्थिनी तः सर्वाभेदबोधने पर्यवस्यतीति परिहरति-। [d] "एवमपी"ति ॥

[a] विषयिविषययोर्मिथो भेदेपि साध्ये अस्तु हेत्वनुयोगः(१) । [b] परबुद्धिस्तद्विषयांश्च प्रति निराबाधा सती श्रुतिरेकस्या बुद्धेर्विषयादपरामपरस्याश्च विषयात्परामभेदबोधाय धावन्ती सर्वाद्वैते एव पर्यवस्यतीति । * [c] नच शक्यमनुमातुं-सर्वस्या बुद्धेर्विषयात्सर्वा बुद्धिर्भिन्नेति *, [d] मा भूदन्यबुद्धिविषयादात्मनोपि (२) बुद्धिर्भिन्नेति । * नचात्मव्यतिरिक्तादित्युक्ते निस्तारः स्यात्*, अद्वैतवादिनः सर्वाभेदमिच्छतः क्वचिदपि तदसिद्ध्या(३)विशेषणाऽप्रसिद्धेरिति । [e] एतेन "सर्वं भिन्नम्"-इति वाक्येन, विना बाधं स्वतः प्रमाणेन, सत्प्रतिशब्दा (४) सेयमद्वैतश्रुतिरित्यप्यनवकाशं प्रत्यवस्थानं मन्तव्यं, [f] यस्मात्कस्मादपि भेदेमिथ्यातः (५)सत्यभेदोपगमेन [g] सिद्धसाधनात्;

(१) हेत्वनुयोगः हेत्वाभासत्वमित्यर्थः । यद्वा, हेतुविषयकः पर्य्यनुयोगः (वि- किं बुद्धित्वं हेतुः ? विषयत्वं वा ?-इत्यादिरूप इत्यर्थः ।

(२) अन्यबुद्धिविषयादात्मनोपि (सकाशाद्) बुद्धिर्भिन्ना मा भूदिति (हेतोः) या बुद्धेर्विषयात्सर्वा बुद्धिर्भिन्नेति नच शक्यमनुमातुमिति सम्बन्धः ।

(३) आत्मव्यतिरिक्तत्वाऽसिद्धेरित्यर्थः ।

(४) तिद्वन्द्विहेतुना सत्प्रतिपक्षितत्ववदस्ति-"सर्वं भिन्नम्"इति प्रतिद्वन्द्वि- यस्याः श्रुतेः सा तथा ।

(५) ब्रह्म मिथ्या न-इति मिथ्याभूताद्घटपटादेः सत्यस्य ब्रह्मणो भेदोपगमेन साधनादित्यर्थः ।

टी० ननु 'बुद्धिविषयौ मिथो भिन्नावि'त्येव प्रतिज्ञेयमिति न
श्रुतिप्रवृत्तिरित्याशङ्क्य निराकरोति–। [a]"विषयी"ति। अत्र बुद्धित्वं
विषयभागेऽसिद्धं, विषयत्वं न हेतुः, बुद्धिभागेऽसिद्धेः,। उभयगतं
दिकं व्यभिचारीत्यर्थः॥ अभ्युपेत्य दूषयति–। [b]"परे"ति। स्वस्वं
न्मिथो भेदसिद्धावपि परविषयेण सह भेदाग्रहात्तत्रैव श्रुतिप्रवृत्ति
द्वैतपर्यवसायिनीत्यर्थः॥ ननु सर्वा बुद्धयः सर्वबुद्धिविषयेभ्यो भिन्ना
त्वात्; सर्वे विषयाः सर्वबुद्धिभ्यो भिन्ना, विषयत्वादिति परस्प
विषययोर्भेदसिद्धौ न श्रुतेरवकाश इत्यत आह– [c]"नचे"ति॥
स्वव्यतिरिक्ताद्विषयाद्भिन्नेति साध्यते? विषयमात्राद्वा –इति वि
सोयं दूषयति–। [d]"मा भूदि"ति॥ बाधं व्युदस्य सत्प्रतिपक्षं व्यु
[e]"एतेने"ति। यद्यपि लौकिकवाक्यात् श्रुतेरेव बलवत्त्वमिति न तेन
तथापि वाक्यार्थे श्रुतितात्पर्यग्रहे सति तथा, ननु तात्पर्याग्रहद
तद्बलवत्तेति भावः॥ [f]"यस्मादि"ति। यद्यपि मिथ्यात्(1)
तच्च न भेदप्रतियोगि, तथापि मिथ्यासत्यभेदव्यवहारस्तया
इति भावः॥ [g]"सिद्धसाधनादि"ति। मिथ्याप्रतियोगिभेदबोध
कवाक्येन सत्यसकलाऽभेदबोधकश्रुतेः सामञ्जस्यादित्यर्थः॥

मू० [a]सर्वस्मादिति स्वतोऽप्यापत्तेः; स्वव्यतिरि
चाद्वैतवादिन्यव्यवच्छेदकम्। तदेवम्–
[b]हेत्वाद्यभावसार्वज्ञ्ये सर्वं पक्षगताऽऽस्थिते।
किञ्चित्तु त्यजता दत्ता सैव द्वारऽद्वयश्रुतेः
अत एव च–
[c]आद्यधीवेद्यभेदीयाऽप्यन्यथानुपपन्नता।
स्वज्ञानापेक्षणादन्ते बाधते नाद्वयश्रुतिम्॥

(1 "मिथ्यात"-इत्यत्र मिथ्यापदप्रतिपाद्यं ब्रह्मव्यलीकमित्यर्थः। ब्र
न्तिकाधिष्ठानत्वे मिथ्याऽलीकयोर्भेदः, तथापि पारमार्थिकत्वेन नित्यालीकत्व
योगित्वं चाऽभिप्रेत्यैतदुक्तम्।

**[d]न च संस्काराऽऽरूढदृढान्वयव्यतिरेकान्वयव्यतिरेकान्वयप्रतिपत्त्युत्पत्तिप्रतिबन्धः शक्यशङ्कः ।**

टी० ननु 'सर्वस्मात्सर्वं भिन्नमि'त्युक्ते क्व सामञ्जस्यमित्यत आह–। [a]"'सर्वस्मादि"ति । तस्यापि(१) सर्वपदार्थान्तर्गतत्वादित्यर्थः । यद्यपि ब्रह्मणो यतःकुतश्चिदद्वैतसाधने स्वस्मादेव तत्सिद्धौ सिद्धसाधनं, सर्वस्मादद्वैतसाधने मिथ्यात्वोऽप्यद्वैतसिद्धिप्रसङ्गः, तथापि स्वसाक्षिक(२)मेव ब्रह्मेत्येव हृदयम् ॥ [b]"हेत्वादी"ति । आदिपदेन दृष्टान्तोपग्रहः । सर्वपक्षीकरणं सार्वज्ञ्यमन्तरेणानुपपन्नमित्यर्थः । आस्थिते=स्वीकृते । एतद्दोषद्वयभयेन यदि पक्षात्किंचिद्बहिर्भाव्यं तदा श्रुतिप्रवेशे तदेव द्वारं स्यात्तन्नैव सावकाशा श्रुतिः सर्वाद्वैतं बोधयिष्यतीत्यर्थः ॥ [c]"आद्ये"ति । आद्या धीः='घटपटौ भिन्नावि'ति भेदधीः, तद्वेद्यो यो भेदो=घटपटभेदः, तदीयान्यथानुपपन्नता=तदन्यथानुपपत्तिः, सापि शेषं गत्वा नाद्वयश्रुतिं बाधते, कुतः ? स्वज्ञानापेक्षणात्(३), तथाचानुपपत्तिज्ञाने(४)सावकाशा श्रुतिः सर्वाद्वैतपर्यवसन्ना स्यादित्यर्थः । यद्यप्यन्यथानुपपत्तिज्ञाने त्वयोपानीय दत्ते तदैव(५) तद्भेदग्रह इति न श्रुतेरवकाशः, यदि सर्वं भिन्नं स्यात्तदा 'घटपटौ भिन्नावि'ति प्रत्यक्षेण गृहीतो घटपटयोरपि भेदो न स्यादित्यनुपपत्तिज्ञानेन सकृद्बाधिता श्रुतिस्तत्रापि न सावकाशा, तथापि "तत्स्वप्रकाशपरमार्थचिदेव भूत्वे"त्यत्र तात्पर्य्यम् ॥ उत्पन्नश्रौताद्वैतधीबाधं निरस्याऽयेग्यताज्ञानात्तदुत्पत्तिप्रतिबन्धं निरस्यति–। [d]"नचे"ति । क्रयोदर्शनप्रभवसंस्कारारूढोन्वयः=सत्त्वं, यस्य व्यतिरेकस्य=भेदस्य, तस्य यावन्वयव्यतिरेकौ, ताभ्यां योन्वयः=संबन्धो व्याप्तिलक्षणो–यो घटादिः स पटादेर्भिन्नो

---

(१) स्वस्यापीत्यर्थः ।

(२) स्वसाक्षिकं = स्वतः सिद्धं, न तु तत्र साधनान्तरापेक्षेति भावः ।

(३) अयमर्थः–प्रतीयमानैवाऽनुपपन्नता भेदं साधयतीति वाच्यम्, अर्थानुपपत्तिदर्शनादुपपादके बुद्धिरर्थापत्तिः इति स्वीकारात्; तथा चानुपपत्तेः स्वगोचरज्ञानात्स्वभेदाप्रसाधकत्वेन तत्रैव दत्तपदा श्रुतिः सर्वाऽद्वैते पर्यवस्यतीति ।

(४) अनुपपत्तिविषयकज्ञाने इत्यर्थः

(५) अनुपपत्तिविषयकज्ञानसमकालमेव तयैव ज्ञातयानुपपत्त्या स्वविषयकज्ञानादपि स्वस्य भेदो गृहीतः, अभेदे हि प्रत्यक्षसिद्धो घटपटयोरपि भेदो न सिद्ध्येदित्यर्थः ।

यः पटादिर्नासौ घटादिरित्येवमाकारः, तेन व्याप्तिप्रत्ययेन प्रतिपत्ते
बुद्धेरुत्पत्तिप्रतिबन्धो न शक्यशङ्क इत्यर्थः। यद्वा, संस्काराद्रूढोऽत
दृढान्वयो=दृढपदो, यो व्यतिरेको=भेदस्तस्यान्वयो 'भिन्नमिदमि
ज्ञानं, व्यतिरेकश्चाऽ'भिन्नमि'ति निश्चयस्ताभ्यामन्वयप्रतीतिः=श्रौतप्र
प्रतीतिरुत्पत्तिप्रतिबन्धो न शक्यशङ्क इत्यर्थः। सर्वलोकप्रसिद्धभेदप्रमा(१)
दद्वैतश्रुत्या संसर्गबोध एव न संभवत्ययोग्यतानिश्चयादिति भा
यद्यपि यत्नक्वचिदुत्पन्नं भेदप्रत्यक्षमेव सर्वाद्वैतप्रतिपादकश्रुतिबाधक
श्रौतप्रतिपत्त्युत्पत्तिप्रतिबन्धः शक्यशङ्क एव, तथाप्युत्पत्तिप्रति
स्वप्रकाशप्रामाण्यावष्टम्भादिदमुक्तम् ॥

मू० यतः–

ᵃ"अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि।
अबाधात्तु प्रमामत्र स्वतःप्रामाण्यनिश्चलाम्॥
ᵇअसंसर्गाग्रहस्यापि मन्ला शंसत्यबाधिते।
अत्यन्तःऽसदसंसर्गाग्रहं संसर्गलग्नकम् ॥ ११॥

टी० "अङ्गुल्यग्रे करिशतं विहरति" "मम कर्णकुहरं प्रविश्य
क्रीडती"त्यादिशब्दादुत्पद्यमानस्य ज्ञानस्यानुभवसिद्धतया शा
योग्यताज्ञानस्यायोग्यताज्ञानविरहस्य वा न जनकत्वं, किंतु, ज्ञानमु
मानं विषयबाधादप्रमाणतया, तदबाधात् प्रमाणतया, व्यवहर्तुं
प्रकृते च विषयबाधो नास्त्येवेत्याशयवानाह–। ᵃ"अत्यन्ते"ति। प्र
करोतीत्युपपद्यते। प्रत्यक्षादिबाधस्त्वाशङ्क्य निरस्त एवेति भावः
अयोग्यतास्थले संसर्गज्ञानं नोत्पद्यते, व्यवहारस्त्वसंसर्गाग्रहमा

(१) भेदज्ञानं यदि प्रमा स्यात्तदाऽयोग्यताज्ञानाच्छ्रुत्या संसर्गबोधो नोत
नत्वेतदस्ति, भेदस्य खण्डितत्वादित्यर्थः। अत एव 'यद्यपी'त्यनेन भेदप्रत्यक्षमेव
धकमित्युक्तमपि साधु संगच्छते। वस्तुतस्तु, भेदप्रमैव यदि स्यात्तदा श्रुत्या संसर्ग
स्यात्, नत्वेतदस्ति, भेदाऽभेदप्रमयोरुभयोरपि लोकसिद्धत्वात् तथाच यत्रैवा
तत्रैव तत्परा श्रुतिः सर्वाऽभेदे पर्यवसास्यति, नातस्तया संसर्गाऽबोधः-प्रता
रणे एवापीत्यनेन 'यत्नक्वचिदि'ति, 'सर्वाऽद्वैते'ति च प्रतिपादनं साधूपपादि

इत्यत आह-। [b] "असंसर्गाग्रहस्ये"ति। असंसर्गाग्रहस्य मन्ता मीमांसकः, स चात्यन्तमसत्त्वऽसंसर्गः सत्यस्थले, तस्याऽग्रहो यत्र तत्र तु संसर्गप्रमामेव मन्यते, तथाच तन्मतेऽप्यद्वैतश्रुत्या संसर्गप्रमैव जननीया, विषयाऽबाधाद्वि- त्यर्थः। सदसंसर्गाग्रहस्तत्र नास्त्येव, विषयबाधस्य निरस्तत्वादिति भावः॥

मू० [a] "अनौचित्यात(१)पि तर्केण दुर्बाधैवाद्वयश्रुतिः।
अनारोपितमूलत्वाद्बलवत्त्वादताहृशा ॥ १३ ॥
[b] प्रवृत्तेना(२)प्यनौचित्यमूलं येन न लूयते।
तत्राऽनौचित्यसाम्राज्यं वैपरीत्यात्तु नात्र तत् ॥ १४ ॥

टी० नन्वनौचित्यऽविनिगमकल्पनालाघवकल्पनागौरवाणां तर्काणां, तर्कप्रतिरूपकाणां(३) वा, प्रमाणसहकारित्वमुभयवादिसिद्धं, तथाचाऽनौचितीतर्कस्य सकललोकसिद्धभेदतिरस्काराऽनर्हत्वलक्षणस्य प्रकृते सत्त्वाद्भेदग्राहिप्रत्यक्षमेव बलीयो, नत्वभेदविषया श्रुतिरित्यत आह-। [a] "अनौचित्ये"ति। तर्कस्याहार्यारोपरूपतया तदपेक्षया श्रुतेरनारोपितमूलाया बलवत्त्वमिति तर्कापष्टब्धप्रमाणापेक्षयापि तथेत्यर्थः। अताहृशाऽनारोपितमूलेनेत्यर्थः। केचित्तूद्भावितनिग्रहस्यानेनैवोद्भावितनिग्रहस्थानपरिहाराऽनौचितीतर्कः(४)श्रुतेर्बाधकः स्यादित्याशङ्काभाग इत्याहुः। तच्चिन्त्य-

(१) सकललोकसिद्धो भेदस्तिरस्कर्तुमनुचितः-इत्यनौचितीतर्कः, उचितस्य भाव औचिती, न औचित्यनौचितीत्यक्षरार्थः। अनौचित्यमित्यदन्तापि तत्समाख्या ज्ञेया।

(२) प्रवृत्तेनापि येन प्रमाणेनाऽनौचित्यस्य मूलं न लूयते=न खण्ड्यते, तत्रैवाऽनौचित्यस्य साम्राज्यं=स्वार्थसाधनसामर्थ्यं भवति, अत्र तु तद्वैपरीत्यात्=अद्वैतश्रुत्याऽनौचित्यमूलस्य पारमार्थिकभेदनिष्ठसर्वजनसिद्धत्वस्य लवनात्, न तद्=अनौचित्यस्य साम्राज्यमित्यर्थः।

(३) तर्कप्रतिरूपकाणां=तर्कमटणानां, न तु तर्काऽऽभासानामित्यर्थः, तेषां णविरोधित्वेन प्रमाणसहकारित्वस्याऽसम्भवात्।

(४) पूर्वपक्षिणोद्भावितं श्रुतिबाधलक्षणं निग्रहस्थानमपरिहृत्य बाधत्वेन तद- भटेन श्रुत्या प्रत्यक्षबाधलक्षणेन निग्रहस्थानेन यस्तस्य परिहारः (प्रतिवन्दी) वेदान्ति- कस्य, साऽनुचितेत्यनौचितीतर्क इत्यर्थः। यद्वा, येनैव घटपटादिभेदावगाहिप्रत्यक्षबाध- लक्षणेन निग्रहस्थानेन श्रुतिर्बाध्यते तेनैव प्रत्यक्षप्रतियोगिकविषयानुयोगिकाभेदावा- धनादभेदत्वावच्छिन्नाऽभेदावगाहिश्रुतिबाधोऽपि बाध्यते इत्युद्भावितनिग्रहस्थानेनैवो

प्र(१)॥ नन्वेवमनौचित्यतर्को नास्त्येव, तथाच "दोषं व्यक्तिविवेकेऽप्य...
लोकविलोचने"(२)इत्याद्यग्रे(३)यदुक्तं तदनुपपन्नं स्यादित्यतः सदसद...
त्ययोर्विषयं विवेचयति-। "प्रवृत्तनापी"ति । अनौचित्यमूलं हि...
सर्वजनसिद्धत्वं, तच्च(४)श्रुत्या पारमार्थिकमद्वैतं बोधयन्त्या मूलं व्याप्य...
कभेदपरं कृतं, तथाचापारमार्थिकभेदमादाय सर्वलोकसिद्धव्यवहारो...
नाऽनौचित्यमिति भावः। "अनौचित्यमूलं व्याप्यव्यापकभावः, तस्य च...
मद्वैतश्रुत्ये"त्यपव्याख्यानम्(५), अनौचित्यस्य व्याप्यव्यापकभावमात्र...
प्रवृत्तः, तत्प्रवृत्तौ वा तत्परत्वे सर्वानौचित्यखण्डने खण्डनकारस्य
"विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रत"मित्यादेरनवकाशापत्तेः। "...
षितनिग्रहस्थानेने"त्यादिस्वोक्तिविरोधाच्च(६) ॥

मू० "* ननु यद्यदेवोदाह्रियते त्वया-नेत(७)इतो...
गृहीत इति ततोऽस्याद्वैताम्नायैरभेदबोधने ता...
सर्वाभेदे पर्यवसातव्यम्-इति, ततस्ततस्तस्य...
स्तदैव गृह्यते मया, तस्मादुदाह्रियमाणतायाम...
ह्रियमाणतयां च कस्यचिदेतत्प्रत्यवस्थानम...

...भावितनिग्रहस्थानपरिहारो वेदान्तिनस्यानुचितः, घटपटाद्यभेदांशे श्रुतिवा...
सद्भावाद्-इत्यनौचितोतर्कः। अथवा, उद्भावितं निग्रहस्थानं बाधादिरूपं...
वादिः,तथा च स्वयं बाधितेन तर्कादिना बाधपरिहारोऽनुचित-इत्यनौचितीतर्कः।

(१) चिन्ताबीजं तु स्वमते दोषमनुद्धृत्यापि प्रतिबन्ध्यादेर्दानस्य पु...

(२) "काव्यमीमांसिषु प्राप्तमहिमा महिमाऽऽदृत"-इत्युत्तरार्द्धम्। अथ...
हिमानामकः कश्चिदालङ्कारिकः काव्यमीमांसाऽभिज्ञेषु प्राप्तमहत्त्वः स्वीयव्यक्तिवि...
मके ग्रन्थे ऽमुं दोषमनौचित्याख्यम् आदृत=पुरस्कृतवान्। किंभूते ग्रन्थे? कवि...
लोचने, कविलोकानां चक्षुर्भूते, अनया कारिकया खण्डनकारेणाऽनौचित्ये धर्मि...
र्ण्यते।

(३) चतुर्थपरिच्छेदस्याऽवसाने।

(४) तच्च मूलमिति सम्बन्धः।

(५) केचित्त्वित्यनेन पूर्वमुक्तस्यैवेदमपव्याख्यानं द्रष्टव्यम्।

(६) नहि उद्भावितनिग्रहस्थानतत्परिहारयोर्व्याप्यव्यापकभावोऽस्ति ये...
दद्यानौचित्यप्रवृत्तिः स्यादिति भावः।

(७) इतइतः=अन्त्यबुध्यादितः, अस्य=उपान्त्यबुध्यादेः। सर्वाऽभेदे...
तव्यमिति यद्यदेव त्वयोदाह्रियते-इति सम्बन्धः। ततस्ततः=अन्त्यबुध्यादितः
उपान्त्यबुद्ध्यादेर्भेदस्तदैव=कथाकाले एव मया गृह्यते इत्यर्थः।

इति *? । मैवम् । [b] अन्तिमबुद्धेरद्वैतश्रुतिजबुद्ध्या-दिता भेदो न त्वया प्रमित-इति मयोच्यमाने यस्तदीयस्ततो भेदः प्रमातव्यः सन तावत् प्रत्यक्षेण, तत्कालमन्तिमबुद्धेरनुपस्थितेः । [c] यदि च केनचिद्धेतुना वा कयाचिदनुपपत्त्या वा तथा स्यात् तदामीमद्वैतवादिनं प्रति हेतोः साध्याऽविशिष्टतया (१), अनुपपत्तेश्च येन विना सा तदविशिष्टतया, ततःकथमाभासात् प्रमोदयः स्यात् ।

टी० सिंहावलोकितन्यायेन शङ्कते– [a] "नन्वि"ति । कस्यचिद्वस्तुनोऽनुदाह्रियमाणतायां श्रुतिव्यवस्थापनानवकाशः, उदाह्रियमाणतायां च भेदग्रहापत्तिरिति(२)प्रत्यवस्थानं खण्डनमस्थाने ऽयुक्तमित्यर्थः ॥ मयोदाह्रियमाणाया अन्तिमबुद्धेः प्रत्यक्षादिना केनापि प्रमाणेन कथायां भेदः साधयितुमशक्य इति परिहरति– [b] "अन्तिमे"ति । यद्यप्यन्तिमबुद्धेरुदाहरणेऽन्तिमत्वव्याघातो, ऽनुदाहरणे श्रुत्यव्यवस्थापनं, मानसप्रत्यक्षेण ततो भेदग्रहश्च तदुदाहरणे, वाक्यजज्ञानसहकृतस्य मनसो बहिरपि प्रवृत्तेः, कविवाक्यवत्(३), तथापि तस्य(४)प्रमाणान्तरत्वापत्तिः ; न वा तादृशप्रत्यक्षे(५)प्रमाणं, तादृश(६)मानसप्रत्यक्षेण सह भेदाग्रहात्तत्रैव श्रुतिप्रवृत्तिरिति

(१) हेतोः साध्याऽविशिष्टतया (साध्याऽभिन्नतया) तत आभासात्कथं प्रमोदयः स्यात्, अनुपपत्तेश्च येन (उपपादकेन) विना सा=(अनुपपत्तिर्भवति) तदविशिष्टतया तत आभासात्कथं प्रमोदयः स्यादित्यन्वयः ।

(२) इतिशब्दो हेतौ ; इति हेतोः कस्यचिदपि वस्तुनः प्रत्यवस्थानं = खण्डनमयुक्तमित्यर्थः ।

(३) यथा कवीनां = क्रान्तदर्शिनां, मानसज्ञानसहकृतं वचोऽतीताऽनागतविप्रकृष्टव्यवहितसूक्ष्मवस्तुषु प्रतिपादकत्वेन सर्वत्रैव प्रवर्तते तद्वदित्यर्थः ।

(४) मानसप्रत्यक्षस्येत्यर्थः ।

(५) बाह्यार्थगोचरमानसप्रत्यक्ष इत्यर्थः ।

(६) किञ्च, मनसाऽन्त्यबुद्ध्यादित उपान्त्यबुद्ध्यादेर्भेदग्रहेऽपि स्वप्रतियोगिको भेदो न गृहीत इति तत्रैव लब्धपदा श्रुतिः सर्वाऽभेदे पर्यवस्येदित्याह–तादृशेति ।

भावः ॥ ननु प्रत्यक्षाभावेप्यनुमानमर्थापत्तिर्वा स्यादित्यत आह—।"
चे"ति। हेतुना=बुद्धित्वादिना। अनुपपत्त्या=प्रथमगृहीतभेदान्यथा
पत्त्या। अनुमानपक्षे—'हेतोरि'ति; अर्थापत्तिपक्षे—'येन विने'ति। अनु
स्यार्थापत्तेर्वा भेदमादाय प्रवृत्तेरद्वैतवादिनं प्रति तदुपन्यासानवका
दिति भावः ॥

मू० [a] * नच वाच्यं स्वयं मया स भेदो ज्ञायते इति नां-
पाक्षिकोपि (१) मां प्रत्यसिद्ध्यादिरिति *, यतो
त्वद्वचनस्य वैयर्थ्यापत्तिः, [c] वचनस्य परार्थत्वात्।
मवलम्ब्यावतिष्ठमानश्च भवानऽप्रतिभातो न मुच्य
[b] नच स्वयं मया प्रमितो भेदः परं प्रति वचसा
बोध्यते इति वाच्यम् *, त्वद्वचसि परस्याप्रत्यय
विजिगीषुं परं प्रति विजिगीष्वन्तरवचनं हि तत्र
तज्जिज्ञासोत्पादनद्वारेण तस्य स्वतस्तदर्थप्रमित्युत्
दनपर्यवसायितयोपयुक्तम्, नचाद्वैतवादिनं प्रति त
कर्त्तुं शक्यते, तं प्रत्यन्यतरासिद्धे (२) रुक्तत्वात्।
[d] नच वाच्यं मम वचनात्सन्देहेनापि श्रुत्या तत्र स
ग्धबाधितभावया नाभेदप्रतिपादनं ते घटते इति
यस्मादद्वैतं मन्यमानेन भेदासिद्ध्या सर्वत्र साध
ऽविशेषादिदोषप्रतिसन्धायिना संशयस्याप्यनव
थीकरणमेव स्यात्।

टी० अनुमानमर्थापत्तिर्वा नाद्वैतवादिनं प्रत्युपन्यस्यते, किं मां
स्वत एवान्तिमबुद्ध्या सहभेदोऽनुमीयते इति ब्रूम इत्याशङ्क्य परिहर

(१) परार्थाऽनुमानपक्षे एवाऽसिद्ध्यादिर्दोषो न स्वार्थानुमानपक्षेपीति भा
(२) अन्यथाऽनुपपत्त्या भेदसाधने उपपाद्योपपादकयो र्भेदस्याऽसिद्धेः, अनु
तत्साधने च साध्यसाधनयोर्भेदस्याऽसिद्धेरित्यर्थः।

[a] "नच वाच्यमि"ति ॥ [b]"अस्ये"ति। स्वयं मया स भेदो ज्ञेय इत्यस्येत्यर्थः॥ वैयर्थ्ये हेतुमाह—। [c]"वचनस्ये"ति। परस्य चाद्वैतवादिनये ऽभावादिति भावः। यद्यपि यथाऽद्वैतवादिनं प्रत्यनुमानमनवकाशं तथा भेदवादिनं प्रति शतशः पठ्यमानाप्यद्वैतश्रुतिरनवकाशा, तेन सर्वत्र भेदग्रहात्। क्वचित्प्रत्यक्षतः, क्वचिदनुमानात्, क्वचिदागमाद्, अर्थापत्तेर्वा तस्य यथायथं भेदग्रहसंभवात्। "मया तावदद्वैतश्रुतिभिरद्वैतं प्रतिपाद्यते"—इत्यपि त्वद्वचनं भेदवादिनं प्रत्यनवकाशमेव। नहि यस्य तादृशश्रुत्यर्थेऽश्रद्धा, तस्य त्वद्वचसि श्रद्धा। भेदप्रतिपादकप्रत्यक्षाद्याभासीकरणमपि तं प्रत्यतन्त्रं, तेन स्वनयेन सर्वसामञ्जस्यकरणात्; तथापि स्वप्रकाशेऽद्वैते तात्पर्यम्॥ ननु मद्वचनेन निर्णयस्तव मा भूत संशयोपि स्यादेव, तावतैव श्रुतिरनवकाशेत्यत आह—। [d]"नच वाच्यमि"ति। प्रत्यक्षादौ बाधकमाने(१) खण्डिते श्रुतिलक्षणसाधकप्रमाणे च सति बाधक(२)साधकमानाभावलक्षणायां संशययोग्यतायां निरस्तायां संशय एव नास्ति, भवन्वा न स प्रमाणपरिपन्थीति भावः। यद्वा, श्रुतिपरिपन्थिना केनचित्प्रमाणाभासेनापि यदि द्वैतमुपस्थाप्येत तदा संशयः स्यात्, तच्च नास्त्येव, प्रत्यक्षस्य निरस्तत्वात्; अनुमानादेः साध्याऽविशेषादिदोषग्रस्तत्वात्; अन्ततो भेदाभावेन तद्घटितविरोधाभावेन विरुद्धनानाकोटिकस्य संशयस्याप्यद्वैतवादिनं प्रत्यनवकाशादित्यर्थः॥

मू० [a]तस्मात्—

एकं ब्रह्मास्त्रमादाय नान्यं गणयतः क्वचित्। आस्ते न धीरवीरस्य भङ्गः सङ्गरकेलिषु॥१६॥ अपि च(३), प्रतीयते

(१) अत्र बाधकमानं श्रुतेर्बाधकं ग्राह्यं, न तु संशययोग्यताकुक्षिनिविष्टं, तथा चाऽबाधिताऽद्वैतश्रुतिसद्भावे साधकमानाभावः कथमिति भावः।

(२) बाधकेन जनितं मानं बाधकमानं (बाधः) साधकेन जनितं मानं साधकमानं (सिद्धिः) तदुभयाभावलक्षणायामित्यर्थः।

(३) परकीयबुद्धिविषयस्य विशेषरूपेण साक्षात्कारसम्भवे बुद्धिविषयो भेदः परेण गृह्येत, भेदज्ञाने विशेषरूपेण धर्म्यादिज्ञानस्य हेतुत्वात्; नत्वेतदस्तीत्याह—अपिचेति।

तावदिदं सामान्यतो, यन्नाम किंचित्परश्चेतसा [illegible]
यन्नस्तीति, किंचिद्वा विवक्षुरित्यादि; तत्र [illegible]
बुद्धिविषयो विवक्षाविषयो वा विशेषतो वि[illegible]
विना नैव प्रतीयते, ततोऽन्तिमबुद्ध्यादिभेदो न भ[illegible]
शक्यप्रमः, परेण(१)तच्चिन्तनादेरपि संभव[illegible]
स्वस्मात्स्वस्य भेदस्याभावात्। ततस्तत्र लब्धपदा[illegible]
मद्वैतश्रुतिर्विश्वाभेदे पर्यवस्यन्ती त्वया शक्या
स्यात्। तस्मात्—

[c]कथं सामान्यतो(२)ज्ञाते नैव ज्ञाते विशेषतः।
पदरोधस्त्वया कर्तुं शक्यः स्यादद्वयश्रुतेः॥[illegible]

टी० सर्वप्रमाणापेक्षया श्रुतेर्बलवत्त्वेन तद्विषयस्य बलवत्त्वा[illegible] वादिनोऽपि बलवत्त्वमित्युपसंहरति—। [a]"तस्मादि"ति॥ यत्र विप[illegible] त्वादिना भेदो दुर्ग्रहस्तत्र श्रुतेः प्रवृत्तिमाह—। [b]"अपि चे"ति। परेक्ष्य[illegible] मानस्य वस्तुनः (यतो भेदो ग्राह्यः) 'तदेव परेणोदासीनं चिन्त्यते'-इति[illegible] स्यानवधारणाद्भेदो दुर्ग्रह इति तदेव(३)श्रुतिविषय इत्यर्थः। यद्यप्या[illegible] स्ततो भेदाग्रहेऽपि अत्र क्रमेण भेदं गृहीत्वा श्रुतिरपसारणीया, ना[illegible] कदा न गृह्यते तच्च कदापि गृह्यते, प्रवृत्त वा प्रमाणं पश्चात्प्रवृत्ते[illegible] वता प्रमाणेन नाऽपसार्य्येव, परिचिन्त्यमानत्वावच्छेदेन(४) तत्रा[illegible] भेदः सुग्रह एव, वस्तुतस्तस्यान्त्यबुद्धित्वादित्यन्यदेतत्, तथापि श्रुते[illegible] स्तत्रावकाश इतिहृदयम्॥ उक्तमर्थं संकलयति—। [c]"कथमि"ति

(१) परेण = भेदप्रमात्रा, तच्चिन्तनादेः = धर्मिप्रतियोगिचिन्तनादेरप्य[illegible] स्यात्तस्य च विशेषरूपेण प्रकृतेऽभावादिति भावः।

(२) सामान्यतो ज्ञाते विशेषतश्च न ज्ञाते कथमद्वयश्रुतेः पदरोधः कर्तुं[illegible] इत्यन्वयः। क्वचित्तु "नैव सामान्यतो ज्ञाते"-इति पाठः।

(३) अभिन्नं वस्त्वित्यर्थः।

(४) परिचिन्तनस्य परिचिन्त्यमानाद्भेदे साध्ये परिचिन्त्यमानत्वा[illegible] तत्रापि = परकीयबुद्धिविषयेऽपि, बुद्धिभेदः सुग्रह एवेत्यर्थः।

तावदिदं सामान्यतो, यन्नाम किंचित्परश्चेतसा[...]
यन्नस्तीति, किंचिद्वा विवक्षुरित्यादि; तत्र[...]
बुद्धिविषयो विवक्षाविषयो वा विशेषतो वि[...]
विना नैव प्रतीयते, ततोऽन्तिमबुद्ध्यादिभेदो न[...]
शक्यग्रहः, परेण(१)तच्चिन्तनादेरपि संभ[...]
स्वस्मात्स्वस्य भेदस्याभावात्। ततस्तत्र लब्धपदा[...]
मद्वैतश्रुतिर्विश्वाभेदे पर्यवस्यन्ती त्वया शक्य[...]
स्यात्। तस्मात्–

'कथं सामान्यतो(२)ज्ञाते नैव ज्ञाते विशेषतः।
पदरोधस्त्वया कर्त्तुं शक्यः स्यादद्वयश्रुतेः॥[...]

टी० सर्वप्रमाणापेक्षया श्रुतेर्बलवत्त्वेन तद्विषयस्य बलवत्त्वा[...]
वादिनोपि बलवत्त्वमित्युपसंहरति–। [a] "तस्मादि"ति॥ यत्र विपक्ष[...]
वादिना भेदो दुर्ग्रहस्तत्र श्रुतेः प्रवृत्तिमाह–। [b] "अपि चे"ति। परे[...]
मानस्य वस्तुनः (यतो भेदो ग्राह्यः) 'तदेव परेणोदानीं चिन्त्यते'-इति[...]
स्यानवधारणाद्भेदो दुर्ग्रह इत्ति तदेव(३)श्रुतिविषय इत्यर्थः। यद्यप्या[...]
स्ततो भेदाग्रहेपि अत्र क्रमेण भेदं गृहीत्वा श्रुतिरपसारणीया, नां[...]
कदा न गृह्यते तच्च कदापि गृह्यते, प्रवृत्त वा प्रमाणं पश्चात्प्रवृत्ते[...]
वता प्रमाणेन नाऽपसार्य्यते, परिचिन्त्यमानत्वावच्छेदेन,(४) तत्रा[...]
भेदः सुग्रह एव, वस्तुतस्तस्यान्यबुद्धित्वादित्यन्यदेतत्, तथापि श्रुते[...]
तस्तत्रावकाश इतिहृदयम्॥ उक्तमर्थं संकलयति–। [c] "कथमि"ति

(१) परेण = भेदप्रमात्रा, तच्चिन्तनादेः = धर्मिप्रतियोगिचिन्तनादेरप्यर्थः[...]
स्वात्तस्य च विशेषरूपेण प्रकृतेऽभावादिति भावः।

(२) सामान्यतो ज्ञाते विशेषतश्च न ज्ञाने कथमद्वयश्रुतेः पदरोधः कर्त्तुं[...]चो [...]
इत्यन्वयः। क्वचित्तु "नैव सामान्यतो ज्ञाते"–इति पाठः।

(३) अभिन्नं वस्त्वित्यर्थः।

(४) परिचिन्तनस्य परिचिन्त्यमानाद्भेदे साध्ये परिचिन्त्यमानत्वा[...]
तत्रापि = परकीयबुद्धिविषयेपि, बुद्धिभेदः सुग्रह एवेत्यर्थः।

मू० * [a]ननु भेदमनङ्गीकुर्वतो भवतः कथं तत्तत्पदपदार्थ-वैचित्रीव्यवहारो न व्याहन्यते? *। [b]कथं व्याहन्यते, प्रतिवद्यते हि तत्। [c]किंच, योयं त्वया व्याघात आपादनीयः सोपि कस्माचिदापादकात्, नचापाद्यापादक-मभिद्यमानमापत्त्यै प्रभवेदिति। तस्मात्-

[d]नानात्व(१)मवलम्ब्यापि वदत्यद्वैतवादिनि।
असिद्धभेदाद्व्याघातः पतेदापादकात्कुतः ॥१७॥(२)

---

[e]इदमपि च विचारमर्हति, यदद्वैतश्रुतीनां बाधक-मुपन्यस्यते प्रत्यक्षादि घटपटप्रभृतिभेदग्राहि तदपि कीदृश्यर्थे पर्यवस्यति?। तथाहि—प्रत्यक्षेण योसौ भेदो गृह्यते स किं स्वरूपभेदः?—१(३)किमन्योन्याभावः?—२ किं वैधर्म्यं?—३ किमन्यदेव वा?—४। [f]यदि तावत् स्वरूपं भेदः, स नाम(४) घटपटयोर्हि स्वरूपं यत्परस्परस्मा(५)द्भेदः तत्परस्परमनन्तर्भाव्य न संभवति, (भेदो हि

---

(१) नानात्वं व्यावहारिकं, काल्पनिकं वा; नतु पारमार्थिकम् अद्वैतवादिनं प्रति ...दसिद्धेः।

(२) { स्वरूपान्योन्यवैधर्म्यपृथक्त्वेतिचतुर्विधो।
भेदो न घटतेऽद्वैते वदत्येतत्तु साम्प्रतम् ॥ }

(३) 'स्वरूपमेव भेद'-इति प्रभाकरमतोपन्यासः, 'अन्योन्याभाव'-इति नैयायि-कैकदेशिनाम्, भट्टैकदेशिनां मतं-'वैधर्म्यमि'ति, वैशेषिकस्य-'अन्यदेवे'ति, पृथक्त्वं गुणा-...त्यर्थः।

(४) बहुषु पुस्तकेषु "स न घटपटयोर्हि स्वरूपम्"-इति पाठः। तत्र स न (स ...चो नोपपद्यते) इत्येतावत्पर्य्यन्तं विरामः कर्त्तव्यः।

(५) यच्च तत्परस्परं च यत्परस्परं, यत्परस्परस्माद्भेदस्तत्परस्परमनन्तर्भाव्य तद्वि-शिष्टो भेद एव न सम्भवति, विशेषणादिव्यतिरिक्तविशिष्टपदार्थानङ्गीकारादित्यर्थः।

(६) किञ्चित्प्रातियोगिक एव भवतीत्यर्थः।

भवन् कस्मादपि(६)भवति अन्यथा 'स्वरूपं भेदः
पारिभाषिकं(१)नाम स्यात्) यदा च घटाद्भेदः
स्येतावानेवार्थः (२) पटादेः स्वरूपं प्रत्यक्षेण गृह्य
घटोपि पटात्मन्येव प्रविष्ट इति पटघटयोरैक्याः
भेदग्राहिणा प्रत्यक्षेणावगाहितमिति विपरीतमा

टी० ननु यथानुमानादेः साध्यसाधनादिभेदाधीना प्रवृत्ति
तवादिनं प्रति तदनवकाशस्तथा श्रुतेरपि पदपदार्थवैचित्र्यमुपजी
तं प्रति तदनवकाशोपि, प्रत्युत तया व्यवहरतो व्याघात।
भेदव्यवहारान्यथानुपपत्त्या भेदसिद्धिरेवास्तत इत्याशङ्कते–। [a]"नन्
परिहरति– [b]"कथं व्याहन्यते"इति ॥ आपाद्यापादकयोरभेदाद्
तापादनं मां प्रत्यनवकाशमित्याह–। [c]"किंचे"ति ॥ पदपदार्थनाना
लम्ब्यापि श्रुतिं प्रमाणयतो मम व्याघातो नास्तीत्याह–। [d]"न
मि"ति । असद्भेदादापादकाद्व्याघातः कुतः पतेदित्यन्वयः॥

---

यं भेदं विषयीकुर्वत् प्रत्यक्षादि श्रुतिबाधकं स्यात् स
कुतो बाध इत्याह–। [e]"इदमि"ति ॥ [f]"यदि तावदि"ति । यदि
स्वरूपं पटस्य, †तत्र घटो† विशेषणम्? उपलक्षणं वा?। आद्ये,
पट†स्वरूपं प्रत्यक्षेण गृहीतमिति घटा†भेद एव प्रत्यक्षेण गृही
वैपरीत्यमित्यर्थः ॥

मू०*[a] ननु यथेयं प्रतीतिरभेदोल्लेखितया व्याख्यायते
भेदोल्लेखित्वेपि दीयतामस्यां दृष्टिः, अभेदे हि
इत्येव, 'पट' इत्येव वा, बुद्धिः स्यात्, ननु 'घट

(१) पारिभाषिकं=स्वसङ्केतमात्रसिद्धम् ।
(२) पटाऽनुयोगिकत्वे सति घटप्रतियोगिकत्वविशिष्ट इत्यर्थः ।
(३) व्याख्यायते=व्युत्पाद्यते ।
† अत्र प्रायः पुस्तकेषु घटपटयोर्मौलिकप्रतियोग्यनुयोगिभावक्रमवैप
रीत्यामुपलब्धं प्रतियोग्यनुयोगिभावमुपेक्षितुमपि, उपन्यास्यं च यथोचितक्रमेण
चिन्हं च † एतत् सर्वत्र व्यवातिष्ठिपम् ।

पट'*?-इति चेत्, [b]स्यादप्येष पर्य्यनुयोगो यद्यविद्याविद्यमानभावं(१) भेदं पारमार्थिकमभेदमिच्छन्तोपि प्रत्यादिशामः । तस्मात्-

[c]अभेदं नोल्लिखन्ती धीर्न भेदोल्लेखनक्षमा ।
तथाचाद्ये प्रमा सा स्यान्नान्त्ये स्वापेक्ष्यवैशसात् ॥१८॥

*[d]अथ 'भेदः'-इत्येतावन्मात्रं पटस्य स्वरूपं, 'घटादि'ति च तद् घटेन प्रतियोगिनाऽन्येन(२)नैव निरूप्यते*?-तदपि नोपपद्यते ।

टी० ननु घटाद्भेदः स्वरूपं पटस्येत्युक्ते घटपटयोर्नाभेदः प्रतीयते, तथा सति 'घटाद्भि'ति न स्यात्, किंतु 'घटः पट'-इति सामानाधिकरण्यं स्यादिति शङ्कते-। "[a]नन्वि"ति ॥ [d]अविद्याविद्यमानं भेदमादाय तथाप्रतीतिरिति परिहरति-। "स्यादि"ति ॥ ननु भेदो न पारमार्थिकः, किंत्वभेदः,-इत्यत्र कें विनिगमकमत आह-। [c]"अभेदमि"ति । घटपटस्वरूपमनुल्लिख्य तदुभयभेदोल्लेखो न संभवति, तदुभयभेदमनुल्लिख्यापि तदुभयस्वरूपोल्लेखः संभवतीत्यभेदग्रह उपजीव्यो भेदग्रहस्येत्यभेद एव पारमार्थिक इत्यर्थः । आद्ये=अभेदे, सा धीः प्रमा, नान्त्ये=भेदे, स्वस्य=भेदग्रहस्यापेक्ष्य=उपजीव्यो ऽभेदग्रहस्तद्वैशसात्तद्विरोधादित्यर्थः । यद्यपि भेदाभेदपदाभ्यामुभयोपस्थितौ विपरीत(३) एवोपजीव्योपजीवकभावः, स्वरूपस्यापि भेदत्वे सर्वधियां भेदोल्लेखित्वस्याऽऽवश्यकत्वे वैपरीत्यमेव, तथापि त्यवष्टम्भादिदमुक्तम् ॥ उपलक्षणपक्षं कक्षीकृत्याशङ्कते- [d]"अथे"ति । यदि प्रतियोग्यपि भेदस्वरूपं स्यात्तदा तन्निरूपकमेव स्यादिति भावः(४) ॥

(१) अविद्यया विद्यमानो भावः सत्त्वं यस्य स तथोक्तस्तम् । अविद्याविद्यमानभावं भेदं यदि प्रत्यादिशामः-इति सम्बन्धः ।
(२) अन्येन=भेदस्वरूपाऽप्रविष्टेनोपलक्षणीभूतेनेति यावत् ।
(३) भेदोपस्थितिपूर्वक एवाऽभेदग्रहः, अभेदस्य भेदाभावरूपत्वादित्यर्थः ।
(४) पूर्वपक्षिणोभाव इत्यर्थः ।

सू० [a]"निष्प्रतियोगिकस्य भेदस्य प्रमाणागोचरत्व
नित्यं प्रतियोगिघटिते एव तस्मिन् प्रमाणप्रव
[b]का चेयं वाचोयुक्तिर्यदन्याऽसाकाङ्क्षं पटस्य
पमन्येन प्रतियोगिना निरूप्यमाणं ततो भेद
तीति ?। नहि यत्स्वरूपेणैव नीलं, तत् पीतेन
प्यमाणं नीलं भवति । [c]'यदपि चोक्तं प्रतियो
घटेन निरूप्यमाणं पटस्य स्वरूपं भेद-इति, त
पटं(१)प्रति प्रतियोगित्वं घटस्य किं स्वरूपं
वा धर्मः कश्चित् ?। यदि प्रथमः, तदा पटं
प्रतियोगित्वमित्येतावानेवार्थो(२)घटस्य स्वरूपं
दात्मन्येव पटमपि प्रक्षिपतीति कथं नाद्वै
पर्य्यवस्यति। [d]तत्रापि यदि प्रतियोगित्वमात्रं
स्यात्मा 'पटं प्रती'ति च पटापेक्षित्वमन्यदेव,
प्यनुपपन्नम् ।

टी० नियमतो यावति(३) यन्निरूपणं पर्याप्तं तावत्
पान्तर्गतमेवेति प्रतियोग्यपि भेदस्वरूपं स्यादित्याह-। [a]"नि
तियोगिकस्ये"ति ॥ ननु संयोगादिस्वरूपं प्रतियोगिनि
यमपि न तद्घटितमूर्त्तिकमित्यनुशयेनाह(४)-। [b]"का चे
ति । अन्याऽसाकाङ्क्षम्=अन्याऽनिरूपणमित्यर्थः ।
पटः † स्वरूपतः पटः, † प्रतियोगिना निरूप्यमाणो भेद
न दोषः, नीलमपि स्वरूपतो नीलं, पीतेन निरूप्यमा

(१) पटं प्रति=पटनिरूपितं, घटस्य=घटनिष्ठं, प्रतियोगित्वं
योगिनो घटस्य स्वरूपं धर्म्मो वेत्यर्थः ।

(२) पटनिरूपितत्वविशिष्टप्रतियोगित्वलक्षणः संपिण्डितोऽर्थः

(३) यावति=प्रतियोग्यादौ, यस्य=भेदादेर्निरूपणमिति,
भेदादौ यस्य=प्रतियोग्यादेर्निरूपणमिति वा,ऽर्थः; उभयथाप्यत्र
दि"त्यनेन प्रतियोग्येव ग्राह्यम् ।

(४) इति पूर्वपक्षिण अनुशयं हृदि निधाय प्रकारान्तरेण
न्याहेत्यर्थः ।

एव, भेदत्वेन निरूप्यमाणेपि तत्र पटात्वमित्यन्यदेतत्, प्रकारयोस्तु भेद एव, तथापि स्वरूपभेदे निरूपकभेद(¹) एवानुपपन्न इति हृदयम् ॥ भेदस्वरूपे(²) प्रतियोगिनमन्तर्निवेश्य प्रतियोगिस्वरूपे भेदमन्तर्निवेशयति–। [c]"यद्यपी"ति । भेदवत् प्रतियोगित्वमप्यन्यसाकाङ्क्षमेवेति तदप्यन्यघटितमूर्ति स्यादित्यभेदे पर्यवसानमित्यर्थः ॥ प्रतियोगिनो(³) भेदस्य विशेषणतायां दोषमुक्तोपलक्षणतामाशङ्क्याह–। [d]"तत्रापी"ति ॥

सू० [a]"अकिञ्चिदपेक्षस्य प्रतियोगित्वस्य प्रमाणाऽविषयत्वात् । [b]'पटं प्रती'त्यत्रापि च स्वरूपतदन्यविकल्पे(⁴) दोष एव । [c]नापि द्वितीयः । [d]योऽसौ धर्मः पटं प्रति प्रतियोगित्वं तस्यात्मनि पटोपि प्रविशतीति तेन(⁵)सह पटस्याद्वैतं स्यात्, [e]यदा च पटो घटस्य धर्मतामापन्नस्तदा घटोपि पटस्य धर्मतामनेनैव

(१) "स्वरूपभेदनिरूपकभेद"–इत्यपि पाठः ।

(२) घटत्वावच्छिन्नप्रतियोगिताकभेदस्य पटरूपत्वाद् भेदः=पटः, तथा च पटस्वरूपे घटमन्तर्निवेश्य घटस्वरूपे पटमन्तर्निवेशयतीत्यर्थः ।

(३) पटनिरूपितत्वविशिष्टप्रतियोगित्वस्य प्रतियोगिरूपत्वात् प्रतियोगी = प्रतियोगित्वं, तन्निष्ठविशेष्यतानिरूपितपटरूपभेदनिष्ठविशेषणतायामित्यर्थः । यद्वा, प्रतियोगित्वं प्रकृते निरूपकत्वं, तथा च निरूपकस्य पटरूपस्य भेदस्य, विशेषणतायाम् = घटप्रतियोगित्वांशे विशेषणतायामित्यर्थः ।

(४) घटनिष्ठप्रतियोगितायाः घटस्वरूपत्वे पटनिरूपितत्वं, घटेऽबाधितं, तथा सति पटनिरूपितत्वं घटस्य स्वरूपं ? धर्मो वा ?; आद्ये पटस्यापि घटस्वरूपत्वापत्तिः, द्वितीये तु पटस्यापि घटधर्मत्वप्रसङ्गाद्धर्मधर्मिणोश्चाऽभेदात्पुनरद्वैतमेवेति दोष एवेत्यर्थः ।

(५) तेन = प्रतियोगित्वेन, सह = सहितस्य, पटस्याऽद्वैतं स्यात् "घटेन सहे"ति शेषः ।

न्यायेन(१)गच्छेत् । [f]नहि पट(२)प्रतियोगित्वस्य
टेन प्रतियोगिना निरूप्यमाणत्वे घटस्याऽन्या
रस्तीति [g]परस्परमाश्रितत्वमाश्रयत्वं च स्यात्;
कस्यचित्प्रमाणस्य विषयो घटारूढः पटस्ता
रूढश्च स एव घट इति । [h]किंच, धर्मस्य
धर्मिणा सममसंबन्धेऽतिप्रसङ्गः(३),संबन्धानन्
वस्था, प्रथमतोन्ततो गत्वा वा स्वभावसंबन्धा
गमे संबन्ध्यन्तरस्यापि तत्स्वभावप्रवेशादभेदे
पर्य्यवसानं स्यादिति ।

टी० ॥ [a]"अकिञ्चिदि"ति । प्रतियोगित्वनिरूपणं
मतो यावति परिसमाप्यते तावत्स्वरूपान्तर्गतमेवेत्यर्थः ।
प्रति प्रतियोगित्वं घटस्ये'त्यनयोक्त्या घटाभेदं पटस्या
'पटं प्रती'ति तदेकदेशे(४)नापि तद्भेदसिद्धिरित्याह-।
प्रती"ति ॥ [c]"नापी"ति । प्रतियोगित्वं धर्मः कश्चिदिति
यपक्ष इत्यर्थः ॥ घटप्रतियोगित्वस्य(५) घटधर्मत्वे पटा
घट।धर्मत्वं, प्रतियोगित्वस्य पट।घटितमूर्त्तिकत्वादि
[d]"योसावि"ति । यथा घटप्रतियोगित्वे पटो धर्मस्तद्वत्पट
योगित्वेपि घटो धर्मो वाच्यः, युक्तेस्तुल्यत्वादित्याह-।"

(१) "अकिञ्चिदपेक्षस्य प्रतियोगित्वस्य प्रमाणाऽविषयत्वादि
दिनोक्तेनेत्यर्थः ।

(२) यथा घटनिष्ठप्रतियोगित्वस्य पटघटितमूर्तिकत्वेन पटस्य
धर्मत्वं तथा पटनिष्ठप्रतियोगित्वस्यापि घटघटितमूर्तिकत्वेन घट
पटधर्मत्वं स्यादिति भावः ।

(३) अत्यन्तासम्बद्धयोर्हिमवद्विन्ध्ययोरपि धर्मधर्मिभा
इत्यर्थः ।

(४) "पटं प्रति"–इत्यनेन वाक्यैकदेशेनापि घटपटाऽभे
रित्याहेत्यर्थः । (५) पटनिरूपितघटनिष्ठप्रतियोगित्वस्ये

चे"ति ॥ कुत एवमत आह–। [f]"नही"ति ॥ ततः किमित्यत आह–। [g]"परस्परमाश्रितत्वमि"ति ॥ अस्तूभयोरपि धर्मधर्मिभावः, एतावतापि भेद एवेत्यत आह–। [h]"किंचे"ति । घटप्रतियोगित्वस्य(१) घट†धर्मत्वे येन संबन्धेन तद्धर्मत्वं तस्यापि तदीयत्वे संबन्धान्तराङ्गीकारेऽनवस्था, स्वरूपसंबन्धस्यैव तत्राभ्युपगमे धर्मिस्वरूपसंबन्धो धर्मो, धर्मस्वरूपसंबन्धो धर्मीत्युभयमेकमेव पर्यवस्येदित्यर्थः ॥

मू० [a]"एवमन्यस्मिन्नपि धर्मविकल्पे इति । [b]तस्मात्स्वरूपभेदे प्रमाणं भवत्प्रत्यक्षमद्वैते एव प्रमाणं भवति । * [c]ननु, घटादिकमेव यदाऽन्यानपेक्षं वीक्ष्यते तदा घटादिकमित्येव प्रतीयते यदा पुनः पटादिना निरूप्यते तदा ततो(२)भेद इति प्रतीयते*? । मैवम् । [d]घटादिकमित्येवंभूतप्रतीतेस्तावद्भेदप्रतीतिर्विलक्षणा, सा च न घटादिमात्रेण स्वविषयेणाऽन्यथाकारा भवितुमर्हति, * [e]नच पटादिकमधिकं तदा प्रकाशते इति विशेषः स्यात्*, घटपटविषयप्रतीतितोऽपि वैलक्षण्यात् । [f]नहि 'घटः पटश्चे'ति 'घटात् पटो‡ भिन्न' इतिप्रतीत्योरेकार्थकत्वं कश्चित्प्रत्येति । तत्कस्य हेतोः? पञ्चम्या प्रथमया च वैकल्पिकं निर्देशमसहमानयैव प्रतीतिकलहनिरासात् ।

टी० एवं घटत्वादिनापि धर्मेण सह घटाद्यभेदो वाच्य इत्याह–। [a]"एवमि"ति । धर्मविकल्पे=धर्मभेदे ॥ स्वरूपभेदग्राहिप्रत्यक्षमभेदविषयं पर्यवस्यतीत्युपसंहरति–। [b]"तस्मादि"ति॥ यदन्याऽसाकाङ्क्षं तदन्यसाकाङ्क्षमपि भविष्यति निरूपकभेदा-

(१) पटनिरूपितघटनिष्ठप्रतियोगित्वस्येत्यर्थः ।

(२) ततः=पटादितः, भेदरूपेण प्रतीयते घट इत्यर्थः; "ततः"-इत्यस्य पटादिनिरूपणादिति वा ऽर्थः ।

दिति शङ्कते—। c"नन्वि"ति। एक एव घटोऽन्येन निरूप्य... भेद इति गृह्यते, अन्यथा तु घट एवेत्यर्थः ॥ भेदप्रती... प्रतीत्योर्वैलक्षण्यं विषयवैलक्षण्यपरतन्त्रमिति तदभावात्... तिवैलक्षण्यमेव न स्यादिति परिहारमाह—। d"घटादिके"... ननु प्रतियोगिप्रवेशाऽप्रवेशकृतमेव प्रतीतिवैलक्षण्यमित्यत... e"नचे"ति ॥ 'घटाद्भिन्नः पट'‡ इतिप्रतीति'र्घटः पटश्चे'ति... तेर्विलक्षणा प्रतियोग्यनुप्रवेशमात्रेणानुपपन्नेति ततोपि... न्तरमनुसरणीयमित्याह—। f"नही"ति ॥

सू० a"नहि घटः पटश्चेति प्रत्येतव्ये कश्चिद् घटात्... भिन्न इति प्रत्येति। तस्माद् घटस्य न स्वरू... रूपणे पटप्रतीत्यपेक्षा। * b नच यत्प्रतीतिर्यत्प्र... कारणं स्यात् तत्र तस्याः कारणभूतायाः प्रती... र्थः तस्माद् "अयमि"ति कृत्वा कार्यभूतायाः... तेरर्थः प्रतीयते*, c सा भून्निर्विकल्पकार्यादेवं(... विकल्पकार्यस्य प्रतीतिः, सा च सादृश्यादेवं(... र्यमाणादेः स्यात्। d तस्मात् 'पटो घटाद्भि... त्याद्याकारेण घटादेर्भेद एव भेदावधिभूत... दिसंघटितः स्फुटं सर्वलोकसाक्षिकः प्रतीय... नैकप्रतीते(३)रन्यप्रतीत्यपेक्षामात्रेण ससं... शक्योऽतिप्रसङ्गादिति। e अत एवान्योन्याभाव...

‡ एतच्चिन्हस्थले पटाद्घट इति वक्तव्येपि घटात्पट इति... टयोः प्रतियोग्यनुयोगिभाववैपरीत्येन वचनं प्रतीत्योर्वैलक्षण्य... मायकत्वादौत्सर्गिकं पूर्वापरग्रन्थसारूप्यार्थं तथैव कल्पनीयं वा।

(१) एवं = 'गोत्वाद्गौ'रित्यादिप्रकारेण।

(२) एवं = 'सादृश्यात्स' इत्यादिप्रकारेण।

(३) एकप्रतीतेः( = स्वरूपप्रतीतेः) अन्यस्य प्रतियोगिनो प्र... तिस्तदपेक्षामात्रेणेत्यर्थः। अतिप्रसङ्गात् = 'गोत्वाद्गौः' 'सादृ... रणमि'त्यादिप्रतीतिप्रसङ्गादित्यर्थः।

सवगाह... स्तम्। f... सात्मन्ये...

टी० नन्... स्यत आह—। ...भेदो भवेत्, न... तश्च विषयवै... प्रतियोगिनः ... व्यपदिश्यते 'प... ञ्चमीनिर्देशबल... गोत्वाद्गौः' इत... ज्ञानविषयेपि ... दि"ति। "सा... र्यमाणादे"रित्या... अभेदो नास्त्येव... भावः स्यादपि, ... "तस्मादि"ति ... पर्यवसानादित्य... विश्वप्रतियोगिक... स्वापत्तौ धर्मधर्मि... रुक्तत्वादित्य...

सू० a"किंच, घ... भावस्य प्र... तदा तद्वि...

(१) यस्माद्भे... गिनमात्मन्येवान्तभ... स्वादि"त्याद्युक्तयु... (२) अभेदपर्य...

**अवगाहमानं प्रत्यक्षमद्वैतश्रुतिबाधकमित्यपि निरस्तम् । [f]अन्योन्याभावोपि यस्माद्भेद (१)एष्टव्यस्तमात्मन्येवान्तर्भावयेदुक्तयुक्तिभिः ।**

टी० नन्वेक एव विषयः प्रतीतिभ्यामालम्ब्यतां को दोषः? इत्यत आह—। [a]"नही"ति । भवेदेवं, यदि पञ्चमीप्रथमयोरर्थाभेदो भवेत्, न त्वेवं, ततश्च प्रयोगवैलक्षण्यात् प्रतीतिवैलक्षण्यं ततश्च विषयवैलक्षण्यमित्यर्थः ॥ ननु घटस्वरूपभाने कदाचित्प्रतियोगिनः पटस्य ज्ञानं हेतुरिति ज्ञानगतहेतुत्वं पटे आरोप्य व्यपदिश्यते 'पटाद्घट'—इति, यथा 'धूमादग्निरि'ति; तथाच न पञ्चमीनिर्देशबलाद्विषयवैलक्षण्यमत आह—। [b]"नचे"ति ॥ तर्हि गोत्वाद्गौः' इत्यपि प्रतीतिः, 'अवयवाद्गौः' इत्यपि च स्याज्जनकज्ञानविषयेपि पञ्चमीनिर्देशस्य त्वयेष्यमाणत्वादित्याह—। [c]"मा भूदि"ति । "सादृश्यादे"रित्यादिपदात्पदलिङ्गादिग्रहः । "स्पर्शमाणादे"रित्यादिपदात्पदार्थलैङ्गिकादिसंग्रहः ॥ तस्मात्स्वरूपभेदो नास्त्येव । यदि प्रतीतिबलादाऽऽस्थीयते तदाऽन्योन्याभावः स्यादपि, यदि तत्र बाधकं न भवेदित्युपसंहरन्नाह—। "तस्मादि"ति ॥ [e]"अत एवे"ति । प्रतियोग्यधिकरणयोरभेदपर्यवसानादित्यर्थः ॥ एतदेवाह—। [f]"अन्योन्याभावोपी"ति । विश्वप्रतियोगिकान्योन्याभावस्य घटधर्मत्वे विश्वस्यापि घटधर्मत्वापत्तौ धर्मधर्मिणोरभेदपर्यवसानस्य(२) स्वरूपभेदप्रस्तावे युक्तेरुक्तत्वादित्यर्थः ॥

**सू० [a]किंच, घटपटयोस्तद्वदन्ययोश्च तादात्म्यमन्योन्याभावस्य प्रतियोगि मन्तव्यं, तद्यदि सर्वथा नेष्यते, तदा तद्विशिष्टस्तदुपलक्षितो वाऽन्योन्याभावोपि**

(१) यस्माद्भेद एष्टव्यः=यत्प्रतियोगिको भेद एष्टव्यः, तं प्रतियोगिनमात्मन्येवान्तर्भावयेत् "निष्प्रतियोगिकस्य भेदस्य प्रमाणाऽगोचरत्वादि"त्याद्युक्तयुक्तिभिरित्यर्थः ।

(२) अभेदपर्यवसानस्य युक्तेरुक्तत्वादित्यन्वयः ।

न प्रमाणेन प्रत्येतुं शक्यः । नहि शशविषा
ष्टस्तदुपलक्षितो वा कश्चित्प्रामाणिको भवि
तत्कस्य हेतोः ?। तस्मिँस्तद्विशिष्टरूपेर्ये(१)
चोपलक्षणव्यवच्छिद्यमानात्मनि प्रमाणं निवि
विशेषणमपि तदीयं तदुपलक्षणमपि वा नानु
वितुं प्रभवति, तस्मिँ(२)श्चात्यन्तमसत्येवावल
तत्प्रामाण्यं शक्यसमर्थनम् । * [b]नच वाच्यं
तियोगिको घटमाश्रितोऽसावभावोऽभ्युपगम
नात्यन्ताऽसत्प्रतियोगिकतादोषमावहतीति
सति संसर्गाभावादन्योन्याभावस्य को
स्यात्?। [d]नहि यथा घटाभावः पटसंसर्गीति
सर्गाभावं पटे समर्थयसे तथा घटाभावः प

इति तत्तादात्म्याभावं पटस्य स्वीकरिष्यसि।
त्तादात्म्यं संसर्गं च प्रतियोगिकोटावन्तर्भाव्या
न्याभावसंसर्गाभावयोर्वैलक्षण्यमभ्युपेयम्, तथा
चात्यन्तासत्प्रतियोगिता दुर्वारा ।

टी० 'तादात्म्याभावः'—इतिव्यपदेशानुरोधेन ता
स्यैव प्रतियोगितामभ्युपगमस्य दोषमाह—। [a]"किंचे"ति।
टयोस्तादात्म्यमत्यन्तासदिति तत्प्रतियोगिकाभावप्रतीतौ
षणत्वमुपलक्षणत्वं वा तस्यानुपपन्नमित्यन्योन्याभावप्रती
न भवेद्, भवन्ती वा न प्रमा स्यादसद्विषयत्वादित्यर्थः ॥

(१) तद्विशिष्टरूपेर्ये (=अत्यन्तासद्विशिष्टरूपेर्ये) तस्मिन्
निविशमानं तदीयं विशेषणं नाऽनुल्लिखद्भवितुं प्रभवति, तादृशि
लक्षणव्यवच्छिद्यमानात्मनि (अत्यन्ताऽसतोपलक्षणेन व्यवच्छि
आत्मा=स्वरूपं, यस्य तस्मिन्) प्रमाणं निविशमानं तदुपलक्षण
ऽनुल्लिखद्भवितुं प्रभवतीति योजना ।

(२) तस्मिन्=विशेषणीभूते उपलक्षणीभूते वा तादात्म्ये।

तादात्म्यं प्रतियोगि, किंतु पटादिरेव, तथाच नात्यन्तासद्विषयतान्योन्याभावप्रतीतेरत आह—। [b]"नच वाच्यमि"ति ॥ [c]"तथा सती"ति । एवं सति घटनिष्ठपटप्रतियोगिकाभावोऽत्यन्ताभाव एव स्यान्न तादात्म्याभाव इत्यर्थः ॥ ननु घटनिष्ठः पटप्रतियोगिकोऽभावः संसर्गाभाव एव, अयं तु न घटनिष्ठः, किंतु घटात्मक एवेति महान्भेदोऽत आह—। [d]"नही"ति । एवमभ्युपगमे तवापसिद्धान्त इति भावः । * ननु घटपटतादात्म्यमत्यन्तासदिति न घटतादात्म्यमपि, तथाच तदेव तादात्म्याभावप्रतियोगि स्यादिति नात्यन्ताऽसत्प्रतियोगिकता *?—इति चेन्न, घटतादात्म्यस्य पटे निषेधः संसर्गाभाव एवेत्यग्रे वक्ष्यमाणत्वात् (१) । नचेह तादात्म्यं प्रतियोगितावच्छेदकमिति संसर्गाभावाद्भेदः*, घटमात्रतादात्म्यस्य प्रतियोगितावच्छेदकत्वे संसर्गाभावादविशेषात्; उभयतादात्म्यस्य तत्त्वेऽन्योन्याभावप्रतीतेरसद्विषयत्वापातात् ॥

सू० * [a]न च वाच्यं घटे पटत्वं नास्ति पटे च घटत्वं नास्तीत्येतावन्मात्रपर्यवसितैवान्योन्याभावस्य व्यवस्था भन्तव्येति *, यतस्तया सति घटत्वे पटत्वे च न कश्चित्तादृशो धर्मोऽभ्युपगम्यते योऽन्योन्यस्मिन्निषेद्धुं योग्य इति तयोस्तादात्म्यापत्तौ सत्यां घटे पटत्वं, पटे घटत्वं च, निषेधात् प्रमाणं घटत्वपटत्वशून्यत्वं द्वयमप्यावेदयतीति वैधर्म्यस्य स्वरूपभेदस्य चासंभवेन किं प्रतियोगिनं, किं वालम्बनं(२), विधाय पटघटान्योन्याभावः प्रमाणपथमवतरेदिति। [b]अत एव न वैधर्म्यमपि भेदमावेदयत् प्रत्यक्षमद्वैतश्रु-

(१) "यदि तु तादात्म्यं नामाऽभेदाख्यो धर्मः कश्चिदिष्यते, स घटपटाद्यधिकरणतया निषिध्यते, तदा संसर्गभाव एव स्यात्"—इति अग्रकारिकाव्याख्यानावसरे मूले वक्ष्यमाणत्वादित्यर्थः ।

(२) आलम्बनम्—अनुयोगिनम् ।

[j]प्राग्लोपाविनिगम्यत्वप्रमाणाऽपगमै(१)र्भवे
अनवस्थितिमास्थातुरचिकित्स्या त्रिदोषता

टी० नन्वस्तु वैधर्म्यं विश्रान्तिः किमेतावतेत्यत
[a]"वैधर्म्ये चे"ति ॥ [b]"आत्माश्रयभेदत्वेने"ति । घटत्वपदस
रैक्ये कथं स्वाश्रयादेव स्वाश्रयस्य भेदौ ते(२)स्यातामित्
[c]"ये ते"इति । ये(३)ते इति द्विवचनं विकल्पानुपयुक्तमपि
त्वस्फोरणाय ॥ ननु भेदाभेदाभ्यां प्रकारान्तरमपि स्या
आह—। [d]"परस्परे"ति ॥ [e]"क्रमेणे"ति । अनन्तानां
क्रामिकी वृत्तिस्तदा दिनद्वयस्थायिनि घटादौ न वर्ते
कार्यमात्रे एव न वर्तेरन्नित्यर्थः ॥ ननु, जातः, संबद्धः
कालः, तथाच सर्वे भेदा युगपदेव वर्तन्तामित्याशङ्क्ते-।
धे"ति । यद्यपि युगपदेव वर्तमानानामप्यन्योन्यकलहः
स्यात, नहि घटत्वपृथिवीत्वद्रव्यत्वसत्त्वादीनां युगपद्वृत्तौ
तथापि भेदो भिन्ने वर्ततेऽभिन्नेवेति विकल्पे किमपि ते
तावतेति भावः ॥ [g]"चरमे"ति । यद्यपि युगपद्वृत्त्य
"चरमचरमस्वीकार्य्येणे"त्यनुपपन्नं, तथापि 'भिन्ने
इत्याश्रयणे प्रथमविशिष्टे द्वितीय(४)वृत्तिर्वाच्या, तत्र यौगपद्
प्रथमचरमभावसम्भव एवेति भावः ॥ [h]"उपयोगे"ति ।
त्वप्रतीतिरेवोपयोगः । [i]"एवमि"ति । गवि गोत्वं वर्तते
वा?-इति विकल्प्य गोत्वादिकमपि निरसनीयमित्यर्थः ॥
वलोपे"ति । अग्निमाग्निभेदाङ्गीकारे तेनैवान्यथासिद्धौ

(१) समुदायिनः समुदायिभिन्नत्वपक्षे तृतीयाविभक्त्यर्थः
त्वं, तथाच प्राग्लोपादिप्रयोज्या त्रिदोषतेत्यर्थः, अभिन्नत्वपक्षे
यंस्तया च प्राग्लोपाद्यभिन्ना त्रिदोषतेत्यर्थः ।

(२) एकस्यैव धर्मस्य स्वाश्रयात्स्वाश्रयभेदकत्वे घटत्वमपि
टस्य भेदकं स्यादिति भावः ।

(३) ननु मूले 'यो वैधर्म्यभेदः स किं भिन्ने निविशतेऽभिन्ने
इत्येव वक्तव्यं किं "ये ते वैधर्म्ये भेदौ" इतिद्विवचनोपादाने
आह-ये ते इति ।

(४) द्वितीयवृत्तिर्वाच्या, अपरेषां सर्वेषां युगपद्वृत्तिर्वाच्येत्य

भेदविलोपः, किंभेदभिन्ने को भेदो वर्तते? इत्यविनिगमः, बहवो भेदा एकत्र घटे वर्तन्ते इत्यत्र प्रमाणापगमः, ते एते दोषा अनवस्थायां पतन्तीत्यर्थः । *ननु भेदविशिष्टे एव भेदो वर्तते इत्यभ्युपगमे क्व प्राग्लोपः, भेदप्रतीतेरेव तावद्भेदाभ्युपगममन्तरेणाऽनिर्वाहात् । अत एव नाऽविनिगम्यत्वमिति । अवश्यनिर्वाह्यभेदप्रतीत्युपपादककल्पनायां तत्प्रतीत्यैव(१)भेदानां क्रमयोरुपपाद्ययोरन्यतरस्याऽऽक्षेपात् । "सर्वतो बलवती ह्यन्यथानुपपत्तिरि"ति त्वयोक्तत्वात् । अत एव न प्रमाणापगमो, भेदप्रतीत्यन्यथानुपपत्तेरेव प्रमाणत्वात् । अन्यथा घटकादाचित्कत्वानुरोधेन तत्रापि सामग्रीपरम्पराभ्युपगमो न स्यात् । नचाऽनवस्थापि, तद्भेदभिन्न एव तद्भेदवृत्तेः । तद्वृत्तौ तद्भेदस्योपलक्षणत्वविशेषण(२)त्वाभ्यामुपपाद्यत्वात् । न वा भिन्ने भेदेन वर्तितव्यमिति नियमः । "कुत्र वर्त्तते?–इतिप्रश्ने, यत्र प्रतीयते इत्युत्तरं, कुत्र प्रतीयते?–इतिप्रश्ने, यत्र वर्तते", इति वार्त्तिककारदिशाप्युपपत्तेः । विप्रपञ्चितश्चायमुद्धारो भेदप्रकाशे*? । नैवम् । भेदप्रतीतेराविद्यकं भेदमादायोपपाद्यत्वात् । परमार्थे तु भेदे एते विकल्पा इति भावः । यत्तु,(३)"भेदप्रतीतिरनन्तभेदालम्बना,? एकभेदालम्बना वा?"–इत्यादिना प्राग्लोपाऽविनिगम्यत्वादीनामुपपादनं केनचित् कृतं तदनुपपन्नम्, "अनवस्थितिसास्यात्"रित्यभिधानादनवस्थापक्षे एव दोषत्रयस्याभिधानादिति ॥

मू० [a]"यदि च क्वचिद् गत्वा स्वरूपमेवान्योन्यं व्यावर्तमानं भेद इष्यते तदा ययोः स्वरूपं [b]तथैष्टव्यं [c]तयोर्निःस्वरूपतापत्तिः; [d]अथ*न स्वरूपमात्रं मिथो

(१) अवश्यनिर्वाह्यभेदप्रतीत्यैवेत्यर्थः ।

(२) व्यावर्त्तकत्वमात्रं गुणमुपादाय विशेषणत्वमिहोपाधित्वं ग्राह्यं, तथाच न पूर्वं विशेषणपक्षोक्त आत्माश्रयाख्यो दोष इति भावः । यद्वा, विशिष्टवृत्तिधर्मस्य विशेषणवृत्तित्वानभ्युपगममतेनैतत् ।

(३) कारिकाया व्याख्यानान्तरं दूषयति–यत्त्वित्यादिना ।

व्यावर्तते किंनाम स्वरूपविशेषः*-इत्युच्यते, स्वरूपविशेषमात्रव्यावृत्त्या स्वरूपमात्रं तयो(१)स्यादित्येकत्वापत्तिः ।

टी० ननु स्वरूपभेदभिन्नयोरेव वैधर्म्ये भेदे वर्तः नानवस्थेत्यत आह—। [a]"यदि चे"ति ॥ [b]"तथैष्टव्यो" व्यावर्तमानमेष्टव्यमित्यर्थः ॥ [c]"तयोरि"ति । ययोर्घट स्वरूपं व्यावर्तमानं तयोर्निःस्वरूपत्वापत्तिरित्यर्थः ॥ पटस्वरूपयोरन्योन्यव्यावृत्तावपि स्वरूपमात्रं न व्यावर्त कुतो निःस्वरूपत्वापत्तिरित्याह—। [d]"अथे"ति ॥ घट स्वरूपं न परस्परं व्यावृत्तं, किंतु स्वरूपविशेषः परस्प वृत्त इति तयोरैक्यमेव पर्यवसन्नमित्याह—। [e]"तर्ही"ति विशेषव्यावृत्त्यैव तयोर्भेद इति वाच्यम्*, स्वरूपा स्वरूपविशेषस्य(२)परस्परमव्यावृत्तेः, तद्व्यावृत्तौ वा व्यावृत्तेरावश्यकतया पुनः सैव निःस्वरूपतेति भावः ।

सू० [a]"अथवा, वक्तव्योऽसौ स्वरूपमात्रादन्यो विशे

[b]अथ "न स्वरूपं नाम किञ्चिदनुगतमिष्यते विशेषरूपासु [c]व्यक्तिष्वेव स्वरूपशब्दो नानार्थ विशते"-इत्यभिधत्से, [d]तर्हि गतमनेनैव गोत्वादिसिद्धिप्रत्याशया, [e]नच प्रतिव्यक्ति पदसमयग्रहोपपत्तिः । [f]यदि(३)च स्वरूपं भेद तदा धर्मिणि दृष्टे स्वरूपं दृष्टमिति क्वचिन्न

---

(१) तयोः = घटपटयोः स्वरूपमात्रमव्यावृत्तं स्यादित्यर्थः।

(२) स्वरूपविशेषस्येत्यतोऽग्रे "ऽपि" शब्दो द्रष्टव्यः । तद्व्या स्वरूपविशेष व्यावृत्तौ ।

(३) यदि भेदः=घटपटादिलक्षणो विशेषः, स्वरूपं स्यात्तदा त्वपटत्वादिधर्मराहित्येन केवले धर्मिणि दृष्टे क्वचिदपि 'स्वरू मि'ति सन्देहः=सम्भावनापि कस्यचित्पुरुषस्य न स्यात्, किन्तु दर्शने एव 'स्वरूपं दृष्टमि'ति मतिस्स्यादित्यन्वयपूर्वकोऽर्थः ।

स्यादिति, [g]यदि चाऽभिन्ने भेदो निविशेत तदा याप्येका व्यक्तिः प्रतीयते घटादिः सापि तेनैव भेदे- नाऽनेका स्यादित्येकाभावे नाऽनेकमपि व्यवतिष्ठते ।

टी० यद्वा(१)ऽनेनैवाशयेनाह–। [a]"अथवे"ति । घटस्वरूपं घट एव, पटस्वरूपम्पट एव, नच ताभ्यां स्वरूपान्तरमस्ति तयो- र्द्विशेषपद्वाच्यं स्यादित्यर्थः ॥ स्वरूपविशेषव्यावृत्त्या स्वरूप- मात्रं(२) तयोः स्यादित्याशङ्कते । [b]"अथे"ति ॥ शङ्कितां स्वरूप- पदशक्तिमुपपादयति–। [c]"व्यक्तिष्वेवे"ति ॥ 'इदं स्वरूपमिद स्वरूपमि'त्यनुगतप्रतीत्यनुरोधाद्यद्येकं स्वरूपं न स्वीकरणीयं तदा गोत्वाद्यप्येकमनुगतं न स्यादित्याह–। [d]"तर्ही"ति ॥ स्वरू- पसामान्याभावे दोषान्तरमाह–। [e]"नचे"ति । शक्तिग्रहस्याप्य- नुगतधर्मपुरस्कारेणैव संभवादित्यर्थः ॥ यदि घटपटादिलक्षणो विशेष एव स्वरूपं स्यान्नत्वनुगतमन्यत् तदा दूराद् घटपटाविशे- षाऽनवगाहिज्ञानं स्वरूपमात्रावगाह्यपि न स्यादित्याह–। "यदि चे"ति । भेदः=विशेषः । संशयविपर्ययौ न स्यातामि"ति स्वपव्याख्यानम्(३) ॥ नन्वभिन्नयोरेव घटपटयोर्भेदो वर्तते इति द्वितीयः पक्षोऽस्त्वित्यत आह–। [g]"यदि चे"ति । यदि घटपटा- वभिन्नावेव भिन्नौ स्यातां तदा घटव्यक्तिरप्यभिन्ना भिन्ना स्यादित्येकं किमपि न भवेत्, तदभावाच्च तत्पर्युदासरूपमने- कमपि न स्यादित्यर्थः ॥

(१) तर्हीत्यादिपङ्क्तेर्निरुक्तभावपक्षेऽथवेत्यादिग्रन्थस्याऽन्यार्था- भिधायितामनुसन्धायेदानीं निरुक्तभावार्थप्रतिपादकत्वमेवाथवेत्या- दिग्रन्थस्येत्याह–यद्वे ति ।

(२) स्वरूपमात्रं=स्वरूपसामान्यं, तयोः स्यात् 'अव्यावृत्तम्'–इति शेषः ।

(३) अपव्याख्यानत्वञ्चास्य "नच प्रतिव्यक्ति स्वरूपपदसमपग्रहो- त्पत्तिः"-इत्यस्याऽव्यवहितमौलिकप्रतिज्ञातार्थस्योपपादनपरत्वाभावाद् द्रष्टव्यम् । एतच्चापाततः, वस्तुतस्त्वत्र प्रकृतशाङ्करव्याख्याने एव क्लिष्टकल्पनं दोषः, व्याख्यानान्तरं तु स्वातन्त्र्येण दूषणान्तरपरतया सुव्या- ख्यानमेवेति विभावयामः ।

मू० [a]एतेन न भेदावच्छिन्ने नचाऽभेदावच्छिन्ने भेदो
विशते किंतूदासीने-इत्यपि निरस्तम्, [b]अत
भेदो नाम स्वरूपान्योन्याभाववैधर्म्याऽनात्म
र्मान्तरं पृथक्त्वाऽपरनामकमित्यपि परास्तम्।
हि स्वाश्रये भिन्ने विनिविशेताऽभिन्ने वेत्यादि
क्तदोषलङ्घनाऽजङ्घाल(१)एव स्यात्, [d]स्वाश्रये
स्वस्मिन्नभेदभयाद्यदि स एव भेदो निवि
तदात्माश्रयः, अन्यश्चेत्तस्मिन्नेवं तस्मिन्नप्यन्य
नवस्था, क्वचिदपि गत्वा भेदभेदाश्रययोर्भेदा
स्वीकारे च तदैक्यद्वारिका मूलपर्यन्तमेकता

टी० ननु भेदवृत्तावाश्रयावच्छेदकतया भेदाभेदौ न
किं तर्हि, कुत्र भेदो वर्तते ? इति प्रश्ने, धर्मिणि भेदो
भेदाभेदौदासीन्येन वर्तते इति वा वक्तव्यमिति न
इत्यत आह-। [a]"एतेने"ति । स्वस्मादपि भेदप्रसङ्गेन
स्वस्याप्युदासीनत्वात् धर्मित्वाच्चेतिभावः ॥ ननु स्व
र्म्यान्योन्याभावरूपभेदत्रयखण्डनेपि पृथक्त्वस्य सत्त्वान्न
त्यत आह-। [b]"अत एवे"ति ॥ अतिदेश्यमाह-। [c]"सोऽ
किंच, पृथक्त्वस्य गुणकर्मादावभावात्तद्भेदे द्रव्याणामप्यभे
किंच, पृथक्त्वस्यावधिनिरूप्यत्वाद्भेदस्य प्रतियोगिनिरूप्यत्व
दिति भावः ॥ अन्योन्याभावे वैधर्म्ये च दोषान्तरमाह-।
श्रयेणे"ति । यद्यपि क्वचिद्गत्वा स्वरूपभेदे पर्यवसानमदुष्ट
नचाऽन्योन्याभाववैधर्म्याभ्युपगमानर्थक्यम् *, अनुभवबलेन
रभ्युपगमात्; मूलपर्यन्तमेकताधावनं स्वरूपभेदप्रति
तथापि स्वरूपभेदस्यापि निरस्तत्वादिति भावः ॥

(१) अजङ्घालः = मन्दगामी, तथा च यथोक्तदोषलङ्घने अज
ङ्घालो मन्दगामी यथोक्तदोषाऽनतिक्रमीत्यर्थः ।

(२) "स्वस्मिन्"-इति शेषः ।

(३) अत्र-"इतीतरनिरूप्यत्वसाम्यात्पृथक्त्वेपि भेदपक्षो
पित्तरेव"-इति शेषः कथञ्चित् प्रायः पुस्तकेषु लुप्तो द्रष्टव्यः ।

[a]तद(१)द्वैतश्रुतेस्तावद्बाधः प्रत्यक्षतः क्षतः ।
[b]नानुमानादि तं(२) कर्तुं तवापि क्षमते मते ॥ २० ॥
[c]अद्वैतागमनासीरे साधु सा धुन्वती परान् ।
सेवामेवार्जयत्यर्थापत्तिपत्तिपरम्परा ॥ २१ ॥

मू० * [d]नन्वद्वैतश्रुतयो वर्णपदविभक्तितदर्थादिभेदानुपजीव्यार्थं प्रतिपादयन्त्यः स्वोपजीव्याभि(३)र्भेदबुद्धिभिर्न कथं बाध्यन्ताम्, उपजीवकस्योपजीव्याद् दुर्बलत्वात् * ? । मैवम् । [e]न वयं भेदस्य सर्वथैवासत्त्वमभ्युपगच्छामः; किंनाम, पारमार्थिकं सत्त्वम् । अविद्याविद्यमानत्वं तु तदीयमिष्यते एव, तदेव च कार्य्यकारणभावोपयोगि ।

टी० प्रत्यक्षविषयाभावात् प्रत्यक्षबाधो न संभवतीत्युपहरति–[a]"तदद्वैते"ति ॥ [b]"नाऽनुमानादी"ति । अनुमानापेयाऽऽगमस्य बलवत्त्वात् । अन्यथा नरशिरः कपालं शुचि, प्रायङ्गत्वादित्याद्यप्यवकाशमासादयेदिति भावः ॥ अर्थापत्तेःवपक्षानुकूलत्वमुक्तं स्मारयति–। [c]"अद्वैते"ति । अद्वैतागस्य नासीरे = पुरतः, सा = अर्थापत्तिः, परान् = विरोधिप्रमाणाभासान्, धुन्वती = निराकुर्वन्ती, सेवामानुकूल्यमर्जति=भजते, अत एवार्थापत्तेः पत्तित्वेन(४) निरूपणमुपपन्नमित्यर्थः ॥ श्रुतिजबुद्धेः श्रौतानि नानापदानि कारणमिति नात्वं विना कार्यकारणभावानुपपत्तिः, तमन्तरेण(५)श्रौतबुद्धेनुत्पत्तौ कुत्र बाध्यबाधकभावचिन्तेति शङ्कते–। [d]"नन्वि"ति ॥ नानात्वमात्रस्योपजीव्यत्वं, नतु पारमार्थिकनानात्वस्य, येनोपजीव्यविरोधः स्यादिति परिहरति–। [e]"न वयं भेदस्ये"ति ।

---

(१) तत् = तस्मात् । (२) तं = बाधम् ।

(३) उपजीव्यते कार्य्येणाश्रीयते यत्तदुपजीव्यं ( = कारणम् ) उपजीवति कारणाश्रितं भवति यत्तदुपजीवकं ( = कार्य्यम् ) इत्यर्थः ।

(४) पत्तित्वेन, पदातित्वेनेत्यर्थः ।

(५) तमन्तरेण=कार्य्यकारणभावाऽनुपपत्तिमन्तरेण ।

यद्यप्यद्वैतस्याविद्यकत्वमस्तु, श्रुतिविषयत्वेन तत्पार
प्रत्यक्षविषयतया भेदस्यैव पारमार्थिकत्वं किं न स्यात्
धितसकललोकव्यवहारे प्रतीयमानेप्याविद्यकत्वस
मान्नत्वात्, व्यवहारविषयत्वेनैव पारमार्थिकत्वसाधना
हाराऽविषयस्य ब्रह्माद्वैतस्यैवापारमार्थिकत्वसंभवात्
नुरोधाच्छ्रुतेस्त्वयैवोपपादनीयत्वात्(१), अन्यथा
पत्तेः; एवं तज्जनितबुद्धेरपि(२); यदि च स्वप्रकाश
तदा तत एव द्वैतं किं न स्यात् ?; न हि स्वप्रकाश
विषय इति प्रतिपादयितुं शक्यसि, तथाप्यहं खण्ड
व्यवस्थापक इति भावः ॥

सू० [a]"एतेन "एकमेवे"त्येव(३)कारव्यवच्छेद्ये
तीयमि"ति द्वितीयेन, "न नाने"ति ना
"किञ्चने"त्यनेन बहुना विना नोपपद्यमाने
घातः—इत्यपि प्रत्यादिष्टम्। [b]श्रुतिभिश्चाद्वैत
पारमार्थिकमद्वैतं प्रतिपाद्यते, नच पारम
तिरपारमार्थिकधिया शक्यबाधा, [c]माभूत्
रजतधिया परमार्थशुक्तिमतिबाधः। [d]यत्र
रनुष्ण इतिबुद्धेरुष्णज्ञानोपजीवना(५)दुष्णा
नुष्णबुद्धिबाधस्तत्र द्वयोरप्यविद्याविद्यमान

(१) "उपासनीयत्वात्"—इत्यपि पाठः।

(२) अत्रापि "त्वयैवोपपादनीयत्वात्"—इत्यनुषञ्जनीय

(३) "एकमेव"—इत्येवकारव्यवच्छेद्येन (विजातीयभेद
व्याघातः, "अद्वितीयमि"ति (पदव्यवच्छेद्येन) द्वितीयेन व्या
नाना"—इति नानात्वेन व्याघातः, "किञ्चन"—इत्यनेन ब
नोपपद्यमानेन व्याघात—इत्यपि प्रत्यादिष्टमित्यन्वयः॥

(४) अत्रेत्थमक्षरयोजना—शुक्तिरजतधिया परमार्थशुक्ति
मा भूद् (इत्यतः) पारमार्थिकमतिरपारमार्थिकधिया शक्य
(भवति)।

(५) अनुष्णज्ञानस्य प्रतियोगिविधयोष्णज्ञानमुपजीव्य

युक्तः । *[c]ननु, तत्रापि तर्ह्यनुष्णतापि पारमार्थिकयेव साध्यतामबाधनाय * ? । मैवम् ।

टी० श्रौतपदवर्णनानात्वज्ञानस्योपजीव्यत्वमाशङ्क्य श्रौतपदानामर्थभेदप्रत्ययमन्तरेणाऽप्रतिपादकत्वात् तदुपजीव्यत्वमाशङ्क्याह—। [a]"एतेने"ति, आविद्यकभेदाभ्युपगमेनेत्यर्थः ॥ पारमार्थिकविषयत्वेन श्रुतेरपारमार्थिकभेदविषयकप्रत्यक्षाद्यपेक्षया बलवत्त्वमाह—। [b]"श्रुतिश्चे"ति ॥ अत्राऽनुरूपं दृष्टान्तमाह—। "मा भूदि"ति ॥ ननु यदि पारमार्थिकबुद्धिरपारमार्थिकधियं बाधते इति वस्तुगतिस्तदोष्णताग्राहिप्रत्यक्षमनुष्णताऽनुमानं एव सते न बाधेताऽपारमार्थिकधर्मविषयकत्वादित्यत आह—। "यत्र त्वि"ति । वस्तुगतिरियं यत् पारमार्थिकविषययैव धियाऽपारमार्थिकधीर्बाध्यते, व्यवहारस्तु वस्तुगतिमननुरुध्यापि, इति व्यवहारदशायां प्रत्यक्षस्यैव बलवत्त्वाद्बाधकत्वमुच्यते इत्यर्थः ॥ ननु परमार्थसदद्वैतगोचरा श्रुतिरित्यबाध्येति यथा त्वयोच्यते तथाऽनुष्णतानुमानवादिनापि तस्याः पारमार्थिकत्वमभ्युपगम्यैव तत्रापि प्रत्यक्षबाधोऽपि निरसनीय इत्याशङ्कते—। [e]"नन्वि"ति ॥

मू० [a]"अनुष्णताया जलादिदृष्टान्तसजातीयायाः शीताद्यव्यावृत्तस्वरूपाया प्रसाधनेनाविद्याविद्यमानत्वे एव विश्रामात्; तत्रै(१)वंविधरूपतानङ्गीकारे चाद्वैतस्यैव नामान्तरकरणापत्तेः; ततस्तस्यां ज्ञेयज्ञानादिभेदावश्याभ्युपेयतया(२)जगद्बाधयुक्तिकवलाऽप्रवेशा-

(१) तत्र=अनुष्णतायाम्, एवंविधरूपताऽनङ्गीकारे=जलादिदृष्टान्तसाजात्यानङ्गीकारे ।

(२) ज्ञेयज्ञानादिभेदस्याऽवश्यमभ्युपेयता ज्ञेयज्ञानादिभेदावश्याभ्युपेयता ("लुम्पेदवश्यमः कृत्ये तुम्काममनसोरपि" इति मलोपः) तयेत्यर्थः, जगद्बाधयुक्तयो दृग्दृश्यसम्बन्धखण्डनयुक्तयस्ताभिर्यत्कावल्यं अनुष्णतायाः कवलनं=ग्रसनं (बाधनमिति यावत्) तस्य योऽप्रवेशस्तस्याऽसम्भवात्, जगद्बाधयुक्तिभिर्जगदन्तर्गताऽनुष्णताया अपि बाधनान्न ब्रह्मवदबाध इति भावः ।

संभवात् । [b]अद्वैते च द्वैताश्रयस्य बाधस्य वास्त
नवकाशादपारमार्थिकत्वसंभावनापि दूरत ए
रतीति । * [c]ननु(१)किमद्वैतपरमार्थताभ्यु
समाहितं भवति, यत उपजीव्यबाधादद्वैते
श्रुतिर्जनयितुं न शक्नोतीति ब्रूमः * ? । मैवम्
हि पारमार्थिकमिदं पारमार्थिकेन भेदेन बा
(२), नत्वविद्याविद्यमानेन, तस्मादविद्याव्यव
भेदं तद्बोधं चोपजीवन्त्या(३) [e]न परमार्थाद्वै
रुपजीव्यबाधः । [f]यदि श्रुतिजन्या भवन्त्य
बुद्धिरविद्याविद्यमाना, तथापि तद्विषयस्ता
मार्थसदेवाद्वैतं, विरोधेन(४) च तस्या बाध्यत
च नास्तीति ।

टी० जलादौ याऽनुष्णता सैव यदि वह्नौ साध्यते
तदितरप्रपञ्चबाध्यत्ववत्तद्बाध्यत्वमपि सुलभम्, अथ तं
क्षणमेवानुष्णत्वं साध्यते यत्र प्रपञ्चबाधकयुक्तयो न प्र
तदा तदेवाऽद्वैतमिति सिद्धं नः समीहितमिति परिहा
[a]"अनुष्णताया"इति ॥ ननु कथमद्वैतस्यापि न जगद्व
युक्तिकवलनमत आह–। [b]"अद्वैते चे"ति । बाधकयुक्त
भेदगर्भाः, भेदः खण्डित इति वास्तवो बाधो नास्त्येवेति

(१) "यद्यपि 'नच दूढान्वये'त्यादिनेदमाशङ्क्य निराकृतं
तथाप्युपजीव्यत्वपुरस्कारेणेदानीं शङ्काऽवधेया"–इति प्रगल्भ
श्रीदर्पणे ।

(२) "विरुद्ध्येत"–इत्यपि पाठः ।

(३) उपजीवन्त्याः परमार्थाद्वैतबुद्धेरुपजीव्यबाधो नेत्यन्व
अत्राऽद्वैतबुद्धेरुपजीव्यस्य बाध इत्येकदेशान्वयो द्रष्टव्य, उप
बाध इति वा ।

(४) विरोधेन=विषयापहारेण, तस्याः=अद्वैतधियो,
श्च=विषयापहारश्च, प्रकृते नास्तीत्यर्थः ।

ास्य किञ्चिद्बाधकमित्यर्थः ॥ ननु परमार्थमतिरपरमार्थधिया न ाक्यबाधेति तदा स्यात यदि पदार्थनानात्वस्योपजीव्यस्याविाधादुपजीविकया श्रुत्या ज्ञानं जन्येत, तदेव नास्तीत्याशङ्कते–। "नन्वि"ति ॥ भेदो, भेदबुद्धिर्वा, नाद्वैतं प्रतिबद्धुमर्हति, अपानार्थिकत्वादपरमार्थविषयत्वाच्चेति परिहरति–। [d]"तद्वैतमि"- ं ॥ [e]"न परमार्थाद्वैतबुद्धेरुपजीव्यबाध"इति । (१)प्रतिबन्ध त्यर्थः ॥ ननु यद्यद्वैतबुद्धिः पारमार्थिकी, तदा तयैव द्वैतम्; थाऽपारमार्थिकी, तदा बाध्यत्वान्नाद्वैतसिद्धिरित्याशङ्क्याह–' "यदी"ति। इतरप्रपञ्चबुद्धेरपारमार्थिकत्वेपि विषयस्या(२)द्वैतस्य बाध इति बुद्धेरपि न बाध्यत्वमित्यर्थः । बाधस्य विषयाप्रारूपत्वाद्विषयस्य च प्रत्यक्षादिभिरप्यपहर्तुमशक्यत्वादिति ाव: ॥

० तस्मात्–

पारमार्थिक(३)मद्वैतं [a]प्रविश्य शरणं श्रुतिः ।
बाधना[b]दुपजीव्येन बिभेति न मनागपि ॥ २३ ॥

श्रुतिरपि तदाह–"द्वितीयाद्वै भयं भवती"ति । [c]तच्चाद्वैतं "ब्रह्मैवेदं सर्वमि"ति श्रुत्यर्थेन सहैक्यमापन्नं ब्रह्मैव स्यात्, "विज्ञानमानन्दं ब्रह्मे"ति च श्रुत्या ज्ञानानन्दात्मतया व्यवतिष्ठते । [d]तेन यदिदमद्वैतज्ञानं श्रुत्या जनितं तद्विज्ञानाद्वैतात्मन्येव निविशते । * [e]ननु कथं तस्य श्रुत्या जन्यत्वमुपपद्यते ? * ।

(१) अर्थसौकर्यार्थं "प्रतिबन्ध"इत्यतः प्राक् "उपजीव्यबा-"-इति प्रतीकमनुषञ्जनीयम् ।

(२) विषयस्य=अद्वैतबुद्धिविषयस्य, बुद्धेः=अद्वैतबुद्धेः । अद्वैतस्य ब्रह्मरूपत्वेन द्वैतापत्तिशङ्कावारणं बोध्यम् ।

(३) श्रुतिः पारमार्थिकमद्वैतं शरणं प्रविश्य उपजीव्येन बाधात् मनागपि (=ईषदपि) न बिभेतीत्यन्वयः ।

[f]सत्यमेवं(१) स्यात्, यदि तस्य पारमार्थिकी
जन्यतापि स्यादविद्याव्यवस्थिता तु तज्जन्य
पारमार्थिकेनाजन्यत्वेन विरुद्ध्यते; [g]अत एव
दमेकं साध्यते । यत्तु, तत्र यद्येकता भेदा
यदि चैकत्वसङ्ख्या, यदि वा ज्ञानात्मकत्व,
वाऽन्य एवैकत्वनामा कश्चिदभेदापरपर्यायो
स्तद्रूपत्वं बोध्यते, तच्चाद्वैतव्याघातकत्वान्न सेद्धु
ति, तदा तदपि निष्पीडन(२)मसहमानं त
श्रुतिजन्यत्वेन सहैव निवर्तताम्, यत्तु तादृशस्या
धर्मस्य धर्मितया प्रमितं तन्मात्रमबाधादधिगत
मार्थतो व्यवतिष्ठताम् ।

टी० [a]"प्रविश्ये"ति । विषयीकृत्येत्यर्थः॥ [b]"उपजीव्ये
पदपदार्थनानात्वेन तद्गोचरज्ञानेन चेत्यर्थः ॥ ननु कया
द्वैतं, कयाचिद्ब्रह्म, कयाचिद्विज्ञानं, कयाचिदानन्दः,
प्रतिपाद्यते इति श्रुतीनां विरोधे किमपि न सिद्ध्येत्
रोधे वा सर्वं(३)सिद्ध्येदित्यद्वैतमनुपपन्नमेवेत्यत आह-
ति । यद्यपि "एकमेवाऽद्वितीयं ब्रह्मे"ति प्रस्तुत तथैव
ब्रह्मात्मकत्वसिद्धिः, तथापि श्रुत्यन्तरोपष्टम्भस्तत्राप्युक्त(४)
श्रुतावद्वैतमात्रे तात्पर्यं, नतु ब्रह्मण्यपीति भावः ॥
सामञ्जस्यफलमाह-। [d]"तेने"ति ॥ जन्यजनकभावस्याद्वैत
न्यित्वमाशङ्कते-। [e]"नन्वि"ति ॥ अपारमार्थिको जन्यज

(१) अत्र यदिशब्दानुरोधात् तदेति शब्दोऽध्याहर्तव्यः।

(२) तदपि निष्पीडनं=तादृशमपि न्यायाघातम्, असहमान
नम् = एकत्वादिधर्मविज्ञानम् ।

(३) सर्वम् = ब्रह्मविज्ञानानन्दैतत्त्रयमद्वैतव्यतिरिक्तम् ।

(४) उक्तः, मूलकारेण "ब्रह्मैवेदं सर्वम्"-इत्युक्त इत्यर्थः
हेतुः-तस्यामिति, यतस्तस्याम् = "एकमेवाऽद्वितीयमि"त्या
तावद्वैतमात्रे तात्पर्यं, नतु ब्रह्मणि = ब्रह्मणः सर्वात्मकत्वे,-इत्य

ताद्वैतविरोधीत्याह–[f]"सत्यमि"ति ॥ श्रुतिविषयस्याप्येकत्वा-र्धर्मस्याद्वैतपरिपन्थितामाशङ्क्याह–। [g]"अत एवे"ति । यथाऽ-तज्ज्ञानस्य श्रुतिजन्यत्वमपारमार्थिकत्वान्निवर्तते तथा श्रुति-ोध्यस्य ब्रह्मण एकत्वादिधर्मस्यापारमार्थिकत्वान्निवृत्तौ न ः किञ्चिदनिष्टमित्यर्थः ।

मू० [a]"नहि परमार्थशुक्तौ रजततया प्रतीयते यदा, तदा बाधात्तत्र रजतत्वे व्यावर्त्तमाने धर्मिव्यक्तिरपि तद(१)पराधान्निवर्तते । [b]सेयमद्वैतबुद्धिर्न्न तर्कशतमव-ताय्यं प्राज्ञैरपनेया, यद् आह श्रुतिः- [c]"नैषा (२) तर्केण मतिरापनेये"ति [d]तस्मात्–

धीधना ! (३)बाधनायाऽस्यास्तदा प्रज्ञां प्रयच्छथ ।
क्षेप्तुं चिन्तामणिं पाणिलब्धमब्धौ यदीच्छथ ॥२४॥

[e]सेयमद्वैतदृष्टिर्दृष्टार्थापि, यदाहुः- [f]"स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्" ।

टी० नन्वेकयैव धियाऽद्वैतं(४)विशिष्टमुपस्थापितं, तत्र वशेषणांशेऽयाथार्थ्येऽपि(५)विशेष्यांशे का प्रत्याशा इत्याशङ्क्य नेदर्शनमाह–। [a]"नही"ति । "धर्मिणि सर्वम(६)भ्रान्तं प्रकारे

(१) तदपराधात् = आरोपितधर्मबाधरूपापराधात् ।

(२) एषा=अद्वैतविषया मति,स्तर्केण=श्रुतिविरोधिकुतर्केणाऽऽ-नेया, आ=समन्ताद्, अपनेया=ऽपलपितव्या, न; यद्वाऽऽपनेया = प्राप-णीया नेत्यर्थः ।

(३) धीरेव धनं एषां विदुषां तत्सम्बोधनं धीधना ! इति, अस्याः =अद्वैतबुद्धेर्बाधनाय स्वप्रज्ञां तदाप्रयच्छथ यदि पाणिलब्धं=हस्तप्राप्तं चिन्तामणिं विचिन्तार्थप्रदं समुद्रे क्षेप्तुमिच्छथेत्यर्थः ।

(४) अद्वैतात्मकं ब्रह्म, विशिष्टं द्वैताभावविशिष्टमित्यर्थः "अद्वै-तविशिष्टमि"ति पाठे तु 'ब्रह्म'–इत्यध्याहार्य्यम् ।

(५) अपिशब्दो भिन्नक्रमः, विशेष्यांशेपीत्यर्थः ।

(६) सर्वं ज्ञानमित्यर्थः ।

तु विपर्यय"-इति भावः ॥ ननु श्रुतिव्युत्पादनमेतावता मैथुनवदकिञ्चित्करमेव, तदुपस्थाप्यस्याद्वैतस्य त्वयैव नि॰ किंच, द्वैतमेव तदुपस्थाप्यं किं न व्युत्पादितं? धर्मैर्व्यावृत्तेरप्यद्वैतवदेव संभवात्; कथं वा श्रुतेः प्रामाण्यं? तज्ज्ञानस्याप्रमात्वपर्यवसानात्(२); तदप्रामाण्ये वा कथमद्वैतस्य वाद्वैतादिसकलधर्मविनाकृतस्य ब्राह्मणः सिद्धिः? स्वप्रकाशस्य ब्रह्ममात्रविषयत्वात्, धर्माभावे तस्याऽतन्त्रत्वात्, ब्रह्मणि विप्रतिपत्तेः; द्वैताऽद्वैतविचारस्य गर्दभीक्षीरमथनायमानत्वात्, ब्रह्म सर्वैः स्वीक्रियते, तदेकत्वं त्वयापि नाभ्युपगम्यते, सर्वमिदमाकुलमित्यत आह–। [b]"सेयमि"ति ॥ [c]"नै॰ यद्यपि श्रुतेस्तर्कासहत्वं दोष एव, अन्यथा मीमांसाद्येन, मीमांसायास्तर्कत्वात्; यदाहुः "मीमांसासञ्ज्ञकः सर्ववेदसमुद्भवः । साऽतो वेदो रुमाप्राप्तकाष्ठादिलवणा॰ उक्तं च "यस्तर्केणाऽनुसंधत्ते स धर्मं वेद नेतर"-इति, श्रुतिवाक्यानुरोधेन तर्कोऽनुसरणीयो नतु तद्विरोधेन भावः । श्रुत्या यदद्वैतज्ञानमुत्पन्नं तदपवर्गानुकूलमिति दितव्यमित्युपसंहरति–। [d]"तस्मादि"ति ॥ ननु मुमुक्षुतामयाप्येकमेव ब्रह्म ध्येयमिति किमनेनोपदेशेनेत्यत [e]"सेयमि"ति । मोक्षान्यप्रयोजनकत्वं दृष्टार्थत्वम् ॥ [f]"॰मपी"ति । अद्वैतोपासनलक्षणस्य धर्मस्य स्वल्पमपि भयाद्राजचौरव्याघ्रादिभयात्त्रायते इत्यर्थः । उत्पन्नमात्रेऽद्वैतज्ञानेन विषयेष्वलंप्रत्ययवतोऽविचिकित्सस्य राजचौरादिभयं निवर्तते किं पुनर्गृहीतप्रामाण्येनेति भावः ॥

(१) षण्ढस्य=नपुंसकस्य ।

(२) अद्वैतस्याप्यन्ततो बाध्यत्वेन भवताङ्गीकारात्तद्विषयकज्ञानमप्रमैव पर्य्यवस्यति ।

(३) ननु स्वप्रकाशचैतन्येनैव तत्सिद्धिरित्यत आह-स्वप्रकाशस्येति । धर्माऽभावे=द्वैतादिसकलधर्माभावे, तस्य=स्वप्रकाशस्य अतन्त्रत्वादसाधकत्वादित्यर्थः ।

(४) यथा रुमायां लवणखनौ प्राप्तं काष्ठादिकं लवणमुच्यते; तथा च भवति तथा रुमास्थानीयवेदसमुद्भवस्तर्कोऽपि वेदरूप एवेति ॰

[a]तस्मात्-

ईश्वरा(१)नुग्रहादेषा पुंसामद्वैतवासना ।
महाभयकृतत्राणा द्वित्राणां यदि जायते ॥ २५ ॥

तस्मात्-

[b]आपाततो यदिदमद्वयवादिनीनाम्(२)
अद्वैतमाकलितमर्थतया श्रुतीनाम् ।
तत्स्वप्रकाशपरमार्थचिदेव भूत्वा ।
[c]निष्पीडितादहह निर्वहते विचारात् ॥ २६ ॥

[d]तदिदमेताभिरात्ममतसिद्धसद्युक्तिलक्षणोपपन्नाभि(३)र्युक्तिभिरुपनीयमानमद्वैतमविद्याविलासलालसोपि श्रद्धधातु तावद्भवान्, तदनु(४)चानयैवोपनिषदर्थश्रद्धयाऽध्यात्मं जिज्ञासमानः परमार्थतत्त्वं [e]क्रमाद्वृत्तिव्यावृत्तचेताः [f]स्वप्रकाशसाक्षिकं [g]साक्षि-

(१) यस्माद् दृष्टाऽदृष्टफलाऽद्वैतदृष्टिर्बहुविघ्ना च तस्मादेषाऽद्वैत-
सना पुंसा यदि जायते तर्हीश्वरानुग्रहादेव, तथा च विद्योत्पत्ति-
रपन्थिकल्मषनाशायेश्वराराधने मुमुक्षुभिः प्रवर्तितव्यमित्याशयः ।
नुगर्भं विशेषणं -महाभयकृतत्राणेति, महतः संसारस्य भयात्कृतं त्राणं
या सा तथोक्ता । विशिष्टाधिकारिदुर्लभतां दर्शयति-द्वित्राणामिति ।

(२) अद्वयवादिनीनां श्रुतीनां यदिदमद्वैतम् आपाततोऽर्थतया-
कलितं (=विचारितम्) तत्स्वप्रकाशचिद्रूपमेव भूत्वा निष्पीडितात्
= शोधितात्) विचारान्निर्वहते ( = निर्वाहं प्राप्नोति)-इत्यन्वयः ।

(३) सत्यः = समीचीना युक्तयः सद्युक्तय,स्तासां ज्ञापकं लक्षणं
सद्युक्तिलक्षणं, तेनोपपन्नाभिर्युक्तिभिरित्यर्थः ।

(४) तदनु च स्वात्मनैव भवान् परमार्थतत्त्वं साक्षात्करिष्यतीत्य-
यः । "अध्यात्मं जिज्ञासमान"-इत्यनेन लक्षणया ज्ञानेच्छयोरन्तर्नीतं
वेदान्तविचारात्मकं श्रवणं, "क्रमादि"त्यनेन मननं, "वृत्तिव्यावृत्त"त्य-
न विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययसन्तानरूपं निदिध्यासनं
च्यते; तथा च मनननिदिध्यासनाभ्यां फलोपकार्यङ्गाभ्यां सहकृ-
च्छ्रवणाद्भवान् साक्षात्करिष्यति-इति भावः ।

